THE

# KĀSHĪ SANSKRIT SERIES

( *HARIDĀS SANSKRIT GRANTHAMĀLĀ* )

38

( Vyākaraṇa Section, No. 7 )

THE

# Prakṛta-Prakās'a

OF

VARARUCHI

WITH

THE MANORAMĀ COMMENTARY

Of

BHĀMAHA

*With Notes, Introduction & Glossary etc.,*

By

PT. S'RĪ UDAYARĀMA S'ĀSTRI DABARĀL

*Edited by*

Pandit S'rī Rāmachandra Jhā

PUBLISHED BY

JAYA KRISHNA DĀS HARIDĀS GUPTA.

*The Chowkhamba Sanskrit Series Office,*

Benares City.

1940.

हरिदास-संस्कृत-ग्रन्थमालासमाख्य—
काशी-संस्कृत-सीरिज़ ग्रन्थमालायाः
३८

व्याकरणविभागे (७) सप्तमं पुष्पम् ।

वररुचिप्रणीत—

# प्राकृतप्रकाशः ।

भामहकृतमनोरमाव्याख्यासहितः

पण्डित श्रीउदयरामशास्त्रिडबरालेन
बृहट्टिप्पणीभिः विषमस्थलं प्रबोध्य, ग्रन्थान्तरेभ्य आवश्य
कतया धातुविहितप्रत्यादेशान्धात्वादेशांश्च परिष्कृत्य
अपभ्रंशादिशब्दानां परिशिष्टादिना प्रसाधितः ।

पण्डित श्रीरामचन्द्रशर्मणा संशोधितः ।

प्रकाशकः—
जयकृष्णदास हरिदास गुप्तः
चौखम्बा संस्कृत सीरिज़ आफिस,
बनारस सिटी ।

१९९६

श्रीविश्वनाथः शरणम् ।

# प्रथम संस्करणस्य प्रास्ताविकम् ।

श्रीमद्वाग्देवताऽनुरञ्जन विमलमतीनां प्रेक्षावतां सुविदितमेवै-तद् धर्मार्थकाममोक्षाणाञ्चतुर्णांवर्गप्राप्तये एव यतितव्यम् सर्वैः। तत्प्राप्त्युपायाश्च बहवोऽसङ्ख्यै प्रबन्धैः प्रतिपादिता अपि मृदु-बुद्धीनां क्रीडनैकमनोऽनुरागिणाम् न तथोपकर्तुं शक्ता यथा दृश्य-काव्यानि--तानि हि झटिति दर्शनमात्रेणैवानन्दसन्दोहजनकानि सदुपदेशं ग्राहयन्ति। तदुक्तम् नाट्याऽऽचार्येण श्रीमता भरत-मुनिना नाट्यशास्त्रे प्रथमेऽध्याये—

ब्रह्मोवाच-"सर्वशास्त्रार्थसम्पन्नं सर्वशिष्यप्रवर्तकम् ।
नाट्याख्यं पञ्चमं वेदं सेतिहासं करोम्यहम् ॥ १५ ॥

पुनश्च तत्रैव ब्रह्मणोदैत्यसान्त्वनावसरे—

भवतां देवतानां च शुभाशुभविकल्पकैः ।
कर्मभावान्वयापेक्षी नाट्यवेदो मया कृतः ॥ ७२ ॥
नैकान्ततोऽत्र भवतां देवानां चापि भावनम् ।
त्रैलोक्यस्यास्य सर्वस्य नाट्यभावानुकीर्तनम् ॥ ७३ ॥
धर्माधर्मप्रवृत्तानां कामाः कामार्थसेविनाम् ।
निग्रहं दुर्विनीतानां मत्तानां दमनं क्रिया ॥ ७५ ॥
देवानामसुराणां च राज्ये लोकस्य चैव हि ।
महर्षीणां च विज्ञेयं नाट्यं वृत्तान्तदर्शकम् ॥ ८४ ॥
धर्म्यं यशस्यमायुष्यं हितं बुद्धिविवर्द्धनम् ।
लोकोपदेशजननं नाट्यमेतद्भविष्यति ॥ ८६ ॥

इति ।

तानिच सँस्कृतमयानि प्राकृतमयानि च भवन्ति; तदाह मुनिः—

"नानादेशसमुत्थं हि काव्यं भवति नाटके" इति ।

तत्र सँस्कृतभाषापरिज्ञानं पाणिनीयादिव्याकरणेन, प्राकृतज्ञा-नाय च वररुच्यादीनां प्रयत्नः । तच्च किमिति कुशीलवाधीनमेव । वयन्तु आचार्याणां वचनोपन्यासेनैवोदास्महे—

अत्र मुनिः—

"एतदेव विपर्यस्तं संस्कारगुणवर्जितम् ।
विज्ञेयं प्राकृतं पाठ्यं नानावस्थान्तरात्मकम् ॥ अ १७ ॥

श्लो० २ ॥ तथा च वाक्यपदीये भर्तृहरिः—

दैवी वाक् व्यवकीर्णेयमशक्तैरभिधातृभिः । इति ।
कथमियमशक्तिरिति तु न प्रयत्नावगम्यम् ।
"अम्बाम्बेति यथाबालः शिक्षमाणः प्रभाषते ।"
इत्यादिरीत्या देशकालभेदेनैव प्रतीमहे ॥

वङ्गमध्यपञ्चालादिदेशजानां परस्परमेकस्यैव शब्दस्य जागरूको महानुच्चारणभेद एव विप्रतिपन्नानां तुष्टिदो भविष्यति ।

हेमोऽपि-प्रकृतिः संस्कृतम् । तत्र भवं तत आगतं वा प्राकृतम् । इति तथा च गीतगोविन्दे रसिकसर्वस्वः—

"सँस्कृतात्प्राकृतम् इष्टं ततोऽपभ्रंशभाषणम्" इति शकुन्तलायां शङ्करोऽपि संस्कृतात्प्राकृतं श्रेष्ठं ततोऽपभ्रंशभाषणम् इति प्रमाणत्वे-नोदाजहार-संस्कृताद् श्रेष्ठं प्राकृतं जातम् ततोऽपभ्रंशः ।

केचित्तु प्रकृत्या स्वभावेन सिद्धम् प्राकृतम् । ततश्च वैयाकरणैः साधितं हि सँस्कृतमित्यभिधीयते । अतो न सँस्कृतमूलकम् प्राकृतम् । प्रत्युत प्राकृतमूलकमेव संस्कृतम् । इत्याहुः ।

अपरे तु वेदमूलकमिदम् । तनत्वनादिप्रत्ययानाम्, अम्हे अस्मे आदि पदानां, लिङ्गवचनविभक्त्यादीनाञ्च वैदिकैः प्रयोगैः साम्य-दर्शनात् । एतन्मूलकं च संस्कृतम् । इति वदन्ति ।

साम्प्रदायिकैस्तूभयमपि नाद्रियते- यदि स्वभावसिद्धम् प्राकृ-तम् , तर्हि कोऽसौ स्वभावः कीदृशश्च येनेदृगेव भाषणं स्यात् । किं समवेतश्च । जनसमवेतश्चेद् "दैवीवाग् व्यवकीर्णेय" मित्यस्मदभि-हिते पक्षपातः। पारमेश्वरे तु स्वभावे वैरूप्यं नोपपद्यते—नह्यग्नौ शैत्यं

क्वचिदपिकशब्दाद्युपलभ्यते । एवम् तस्माद्भाषाभेदः सुतरान्नोपपद्यते ।

सर्वासामेव भिन्नानामपि पारमेश्वरस्वभावसिद्धत्वे तु भाषा-परिज्ञानिनां विदुषां महान् कोलाहलो भविष्यति ।

अथच यदीयं भाषा वेदभाषा समुद्भवा तत्समकालिका संस्कृतात् प्राचीना वा स्वीक्रियते तर्हि पाणिनीयव्याकरणस्याऽपूर्णतापत्तिः स्यात् तत्र प्राकृतस्याऽव्याकृतत्वात् । भगवता पाणिनिना च तत्र २ बाहुलकेनाऽपि वैदिकशब्दव्याकृत्या स्वव्याकरणस्य पूर्णता-याः प्रदर्शनात् । तथा च गावी गोणी-गोपोतलिकेत्यादीनामपि असाधुशब्दत्वव्यवहारोनोपयुज्यते । प्रत्युत संस्कृताद्विकृतस्य प्राकृतस्येव प्राकृताद्विकृतस्य संस्कृतस्यैवापभ्रंशव्यवहारापत्तिः स्यात् । न तथा व्यवहारस्तथाव्युत्पन्नानामपीष्टः । न ह्यस्ति राजाज्ञा "पाणिनीयादिव्याकृतस्य नाऽपभ्रंशव्यवहारः" इति ।

लिङ्गवचनसाम्यन्तु न दृढतरं प्रमाणम् । नहि आङ्ग्लभाषायाः "फादर" इति, शब्दः उच्चारणसौकर्येणोच्चरितस्य पितृशब्दस्य प्रकृतिरिति कोऽपि प्रेक्षावान् मनुते तथा च-"डाटर" इति शब्दं दुहितृशब्दस्य । नच कोऽपि, तात इत्युच्चारयितव्ये टाट इति रटन् भारतीयो बाल आङ्ग्लभाषापाठकस्तद्देशीयो वा गण्यते ।

अतो युक्तमुत्पश्यामः-प्रकृतिः संस्कृतम् ततः प्राकृतमिति । तथा-च प्राकृतमञ्जर्याम्-"व्याकर्तुं प्राकृतत्वेन गिरः परिणतिंगताः" इति ।

वेदमूलकत्वेऽपि न किमपि प्रमाणम् ।

अस्तु वा यदपि तज्ज्ञानायाऽवश्यं प्रयतितव्यम् । यतोऽत्रभाषायां सुललिताः प्रबन्धाः सन्ति । तदुक्तम्—

"अहो तत् प्राकृतं हारि प्रियावक्त्रेन्दुसुन्दरम् ।

सूक्तयो यत्र राजन्ते सुधानिष्यन्दनिर्झराः" इति ।

तच्च प्राकृतम् वररुचिमते-प्राकृतम् १ पैशाची २ मागधी ३ ॥ शौरसेनी ४ भेदेन चतुर्धा । तासु पैशाची मागधी शौरसेनी विकृती प्रकृतिः शौरसेनात्युभयत्र दर्शनात् । शौरसेनी संस्कृतविकृतिः प्राकृतवत् । प्रकृतिः संस्कृतम् ॥ इति दर्शनात् शौरसेन्यामनुक्तं

आर्षं नवभिः परिच्छेदैः प्रतिपादितप्राकृतानुसारि भवति 'शेषं महाराष्ट्रीवद्' इत्यत्र महाराष्ट्रीपदेन तस्यैव ग्रहणात् । तथा च काव्यादर्शे—

महाराष्ट्राश्रयां भाषां प्रकृष्टं प्राकृतं विदुः, इति ।

हेमस्तु—चूलिकापैशाचिकम् १ आर्षं प्राकृतम् २ अपभ्रंशम् ३ चेत्यधिकभेदैः सप्तधा विभजते ।

तथा च भेदप्रतिपादकानि सूत्राणि ।

आर्षम् । ८ । १ । ३ ।

चूलिका पैशाचिके द्वितीयतुर्ययोराद्यद्वितीयौ । ८ । ४ । ३२५ ।

स्वराणां स्वराः प्रायोऽपभ्रंशे । ८ । ४ । ३२९ ।

प्राकृतसर्वस्वकारमार्कण्डेयेन—भाषा १ विभाषा २ अपभ्रंश ३ पैशाची ४ भेदात् भाषाश्चतुर्धा विभक्ताः ।

तत्र भाषा—महाराष्ट्री १ शौरसेनी २ प्राच्या ३ अवन्ती ४ मागधी ५ भेदेन पञ्चधा ।

अर्द्धमागधी तु मागध्यामेवान्तर्भाविता ।

विभाषा—शाकारी १ चाण्डाली २ शाबरी ३ आभीरिकी ४ शाक्वी ५ ( शाखी ) चेति पञ्चधा ।

अपभ्रंशः—आद्रीं द्राविडीं च विना सप्तविंशतिधा च विभक्तः ।

अन्या अपि तिस्रो भाषाः स्वीकृताः—नागर—व्राचडोपनागरभेदेन । पैशाचीभाषा तिसृषु नागरभाषासु विभक्ता तद्यथा कैकेयी १ शौरसेनी २ पाञ्चाली ३ च ॥ रामतर्कवागीशेनाऽपि एवमेव प्रकटितम् । सर्वैरपि प्राकृतवैयाकरणैर्महाराष्ट्री पैशाची मागधी शौरसेनी चैताः प्राकृतभाषाः स्वीकृताः । काव्यालङ्कारे रुद्रटः भाषाणां तिस्रोविधाः "प्राकृतं संस्कृतञ्चैतदपभ्रंश इति त्रिधाः" इति ।

काव्यादर्शे दण्डी च "तदेतद्वाङ्मयं भूयः संस्कृतं प्राकृतं तथा अपभ्रंशश्च मिश्रं चेत्याहुराप्ताश्चतुर्विधाः" ॥ १।३२ । चतुर्विधा हि ग्रन्थाः संस्कृतनिबद्धाः केचिद् , प्राकृतनिबद्धाः केचिद् केचिदपभ्रंशनिबद्धाः केचिदासां साङ्कर्य्येण निबद्धाःमिश्रा इत्युच्यन्ते इत्यर्थः ।

संस्कृतं सर्गबन्धादि-प्राकृतं स्कन्धकादिकम् आसारादीन्यपभ्रंशो-नाटकादिषु मिश्रकम् इति च ।

पुराणवाग्भट्टोऽपि वाग्भट्टालङ्कारे २ । १ संस्कृतप्राकृतापभ्रंशभूतभाषितेति भेदेन चतुर्धा विभजते ।

अर्वाचीनोऽपि अलङ्कारतिलके १५-३ ॥ एवम् रुद्रटश्च काव्यालङ्कारे २ । १२ सूत्रे ॥ एवमपभ्रंशविचारस्यावश्यकत्वाद् वररुचिना कथमुपेक्षित इति विप्रतिपत्तौ कश्चिद्-इयमपूर्णतैव वररुचेरिति ।

आसां प्रादुर्भाव एवनेति त्वन्यः ।
अपरे तु-"वररुचिना दाढादयो बहुलम्" ४ । ३३ इति सूत्रकरणादेवाऽपभ्रंशोऽपि संगृहीत एव । तस्य च भामहेन आदिशब्दो यं प्रकारार्थः तेन सर्व एव देशसङ्केतप्रवृत्ताः भाषाशब्दाः परिगृहीताः । इति व्याख्यातत्वात् । अपभ्रंशश्च देशसङ्केतप्रवृत्ता एव भाषाः तदुक्तं वृद्धवाग्भट्टेन-"अपभ्रंशस्तु यच्छुद्धं तत्तद्देशेषु भाषितम्" इति तथा च काव्यादर्शे दण्डी-यदा च आभीर्यादयो देशभाषाः काव्यनाटकेषु निबद्धास्तदाऽपभ्रंशपदेन व्यवह्रियन्ते, तदुक्तम् तेन-"शौरसेनी च गौडी च लाटी चान्या च तादृशी । याति प्राकृतमित्येवं व्यवहारेषु सन्निधिम् ॥ १ । ३५ आभीरादिगिरः काव्येष्वपभ्रंश इति स्मृताः शास्त्रेषु संस्कृतादन्यदपभ्रंशतयोदितम्" १ । ३६ । इति । यत्तु अपभ्रंशपदेन भारतीयाः प्रचलिता भाषा गृह्यन्ते ताश्च निबध्यन्ते काव्यनाटकेषु । तदुक्तम् नाट्यशास्त्रे भरतमुनिना "शौरसेनं समाश्रित्य भाषा कार्या तु नाटके अथवा छन्दतः कार्या देशभाषाप्रयोक्तृभिः" १७-४६ इति अधुना प्रचलिततत्तद्देशभाषास्वपि बङ्गदेशे यात्रा गन्धर्वगानम् नैपाले कूर्माचले च हरिश्चन्द्रादिनर्तनम् उपलभ्यते एव अतोऽपभ्रंशस्य-प्राकृतपदेन गृहीतुमशक्यत्वादुचित एव तदनुल्लेखः प्राकृतप्रकाशे इति तत्तु दण्डिविरोधादुपेक्ष्यम् ।

वररुचिसमयेऽपभ्रंशस्य व्यवहारानुदय इति तु न सम्यक् प्रतिभाति "त्रिविधं तच्च विज्ञेयं नाट्ययोगे समासतः । समा-

नशब्दैर्विभ्रष्टं देशीमतमथापि वा' इति भरतमुनिनाऽपि तस्य प्रदर्शितप्रायत्वात् । यथा "गौरित्यस्य गावी गोणी गोपोतलिके-त्येवमादयो बहवोऽपभ्रंशाः" । इति भगवता पतञ्जलिना महाभाष्ये अपभ्रंशस्य व्यवहृतत्वात् । स्वयं दाढेत्यापि सूत्रप्रणयनाच्च स्यादेतत् । सर्वमेवैतद् प्राकृतम् तद्भवः । तत्समः । देशी चेति त्रिधा विभजन्ते सूरयः । तदाह दण्डी—"तद्भवस्तत्समो-देशीत्यनेक प्राकृतक्रमः" इति, तत्र यद्यपि तद्भव प्राकृत व्याकृत्यर्थ-मेव प्राकृतवैयाकरणानां प्रयत्नः तदुक्तम् "अथ प्राकृतम् । ८१ । १ । इति सूत्रे व्याख्यानावसरे हेमेन "संस्कृतानन्तरं प्राकृतस्याऽनुशा-सनं सिद्धसाध्यमानभेदसंस्कृतयोनेरेव तस्य लक्षणं न देश्यस्य इति ज्ञापनार्थम् । संस्कृतसमं तु संस्कृतलक्षणेनैव गतार्थम्" इति । तथापि तत्तत्प्रदेशेषु बाहुलकेन दैशिकानामप्युल्लेखाद्दैशिकमपि प्रायस्तद्भवत्वेन स्वीकुर्वन्ति ।४।३३ सूत्रव्याख्यानावसरे भामहेन देशसङ्केतेत्यादिनैतस्यार्थस्य स्पष्टमुक्तत्वात् ।

हेमोऽप्याह "गोणादयः" ८ । २ । ७३ गोणादयः शब्दा अनुक्त प्रकृतिप्रत्ययलोपागमवर्णविकारा बहुलं निपात्यन्ते तद्यथा गौः—गोणी । गावी । त्रिपञ्चाशत्—तेवण्णा । त्रिचत्वारिंशत्—तेआलीसा" । इति । तत्समस्तु न संस्कृतात्पृथगिति न तद्विषयकः प्रयत्नः कस्यापि

अथ कोऽयं प्राकृतसूत्रप्रणेता वररुचिः कदासमभवत्कदा-चैतत्सूत्राणि प्रणिनायेति वृत्तं सम्यक्तया निश्चेतुं न शक्यते । एको वररुचिः सुप्रसिद्धविक्रमराजसमानकालिकोऽप्युपलभ्यते तथाहि–"धन्वन्तरिक्षपणकामरसिंहशङ्कुवेतालभट्ट, घटखर्परकालि-दासाः । ख्यातो वराहमिहिरो नृपतेः सभायां रत्नानि वै वररु-चिर्नवविक्रमस्य" इति ।

अन्यत्र "पाणिनिं सूत्रकारं च भाष्यकारं पतञ्जलिम् । वाक्य-कारं वररुचिम्—

इति पाणिनिसमकालिकः कात्यायनाऽपराभिधः प्रतीयते ।

महाभाष्यकारैरपि "तेन प्रोक्तम्" ४। ३। १०७ सूत्रे "वररुचिना प्रोक्तो ग्रन्थः वाररुचः" इति चोदाहृतम्। तथाच प्राकृतमञ्जर्याम्—
"प्रसीदन्तु च वाचस्ता यासां माधुर्यमुच्छ्रितम्
प्राकृतच्छद्मना चक्रे कात्यायनमहाकविः

व्याकर्तुं प्राकृतत्वेन गिरः परिणतिं गताः कोऽन्यः शक्तो भवेत्तस्मात्कवेः कात्यायनादृते" । इति ।

अयमेव कात्यायनापराभिख्यः श्रौतसूत्रकारः पाणिनीयसूत्रवार्तिककारो रूपमालाप्रणेता बृहत्संहितानिर्माता चेत्यत्र दृढतरप्रमाणाऽभावेऽपि विरोधं नाऽऽकलयन्ति सूरयः। कथा सरित्सागरकथामञ्जर्यादावुपवर्णितोऽपि वररुचिर्विलक्षणप्रतिभाशालित्वेन नोक्तार्थे विरोधमवतारयतीति विवेचकैर्विवेचनीयम् ।

अन्यो वाप्ययं वररुचिः स्यात्। तथाप्येतत्प्रतीयते यदयं सर्वेषु प्राकृतवैयाकरणेषु प्रथमः आचार्यः ।

एतत्सूत्रप्रकाशवृत्तिं प्रणेता भामहः कदा समभवत् इत्यप्यतिदुरुहताङ्गतो निर्णेतुम ।

भामहप्रणीतमलङ्कारलक्षणमप्यस्तीति श्रूयते। सच काश्मीरदेशीयः परमप्राचीनश्चेति झल्लकीकरोपाख्यैर्वामनाचार्यैर्निरूपितम्। एतेनापि वररुचेः परमपुराणता प्रतीयते। इत्यलम् पल्लवितेन।

अन्यत्र प्राकृतसूत्रेषु भाषाबाहुल्येन–कार्यवैविध्येन च वररुचेः प्राचीनता प्रदर्श्यते। यच्चकार्यं वररुचिना बाहुलकेन आदिशब्देन च संगृहीतम। तदर्थमपि अन्येषां सूत्रप्रणयनप्रयत्नः। आस्तामेतद्। हेमचन्द्रसमये हि विविधभाषाः भिन्नरूपाः सञ्जाता इति प्रतीयते–तथा च—

प्राकृतप्रकाशतो विशेषकार्याणां दिग्दर्शनम्—

प्रत्यये ङीर्नवा ८। ३। ३१। नीली। नीला–३२–३३।

अणादिप्रत्ययनिमित्तो ङीस्त्रियां वा भवति। साहणी, कुरुचरी–साहणा, कुरुचरा॥

धातवोऽर्थान्तरेऽपि ८। ४। २५९।

उक्तादर्थादर्थान्तरेऽपि धातवो वर्तन्ते । बलिः प्राणने पठितः खादनेऽपि वर्तते । बलइ । खादति प्राणनं करोति वा । एवं कलिः सङ्ख्याने । संज्ञानेऽपि । कलइ । जानाति संख्यानं करोति वा ॥

विलप्युपालभ्योर्झङ्खः आदेशः । झङ्खइ विलपति । उपालभते । भाषते वा ।

फक्कते स्थक्कः । थक्कइ नीचां गतिं करोति विलम्बयति वा । नीहरइ पुरीषोत्सर्गं करोति ॥

बहुलम् ८ । १ । २ । बहुलमित्यधिकृतं वेदितव्यमापादसमाप्तेः । लुप्त य-र-व-श-ष-सां दीर्घः ८ । १ । ४३ ।

प्राकृतलक्षणवशाल्लुप्ता याद्या उपर्यधो वा येषां शकारषकार-सकाराणां तेषामादेः स्वरस्य दीर्घो भवति ।

शस्य—यलोपे, पश्यति पासइ । रलोपे-विश्राम्यति, वीसमइ । मिश्रम्-मीसं । वलोपे-अश्वः आसो । विश्वासः वीसासः । शलोपे-दुश्शासनः दूसासणो ।

षस्य यलोपे-शिष्यः । सीसो । रलोपे वर्षः । वासो । वलोपे-विष्वक् वीसुं । षस्य-निषिक्तः नीसित्तो । सस्य यलोपे-सस्यम् सासं कस्यचित् कासइ । रलोपे-उस्रः ऊसो । वलोपे निस्वः । नीसो । सलोपे-निस्सहः-नीसहो ॥

न दीर्घाऽनुस्वाराद् ८ । २ । ८२ ।

इति द्वित्वनिषेधः ॥

अवर्णो यश्रुतिः ८ । १ । १८० । कगजेत्यादिना लुकि सति शेषो-अवर्णोऽवर्णात्परो लघुप्रयत्नतरयकारश्रुतिर्भवति ।

तित्थयरो-सयढं । नयरं । इत्यादि । क्वचिदन्यतोऽपि इति। पियइ

इतः प्राचीनपुस्तकमधिकमशुद्धमासीद् श्रीमतां वाराणसी-स्थराजकीयसंस्कृत पुस्तकालयाध्यक्षाणां पण्डितवर श्रीगोपीनाथ कविराजमहोदयानां म० म० विन्ध्येश्वरीप्रसादद्विवेदिनां च साहाय्येन लिखितपुस्तकं जर्मनदेशीयकाविलमहोदयसम्पादित-पुस्तकं च दृष्ट्वा यथामति सावधानं संशोधितम् । तत्सहायेनैव यत्र

क्वचित् टिपण्यां पाठान्तरेण च संयोजितम् । द्वादशपरिच्छेदवृत्तौ च साहाय्यं प्रापम् ।

छात्राणामुपकारार्थं पदसाधुत्वज्ञानार्थं तत्तत्कार्यप्रतिपादकसूत्राणाम् संख्या कोष्ठकान्तरे प्रदर्शिता । अन्यग्रन्थेभ्यः कार्यविशेषाश्च टिपण्यां प्रदर्शिताः । मानुषमात्रसुलभतया दृष्टिप्रमादाज्जाता-अनवधानता क्षन्तव्या विद्वद्भिरिति विज्ञापयते विदुषामनुचरः-

वैशाखशुक्ला
एकादशी वि.सं. १९७७ । } पर्वतीय उदयराम डबरालः ।

## अथ नाट्याचार्य-मुनिमतेन भाषाणां भेदप्रदर्शन-पूर्वकं विनियोगः प्रदर्श्यते—

मागध्यवन्तिजा प्राच्या सूरसेन्यर्द्ध मागधी ।
बाह्लीका दाक्षिणात्या च सप्तभाषाः प्रकीर्तिताः ॥ ४८ ॥
शबराभीरचण्डालसचरद्रविडोद्रजाः ।
हीना वनेचराणां च विभाषा नाटके स्मृता ॥ ४९ ॥
मागधी तु नरेन्द्राणामन्तःपुरनिवासिनाम् ।
चेटानां राजपुत्राणां श्रेष्ठिनां चार्द्धमागधी ॥ ५० ॥
प्राच्या विदूषकादीनां धूर्तानामव्यवन्तिजा ।
नायिकानां (च)सखीनां च सूरसेना विरोधिनी ॥ ५१ ॥
योधनागरकादीना दाक्षिणात्याथ दीव्यताम् ।
वाह्लीकभाषोदीच्यानां खसानां च स्वदेशजा ॥ ५२ ॥
शबराणां शकादीनां तत्स्वभावश्च यो गणः ।

(श)सकारभाषायोक्तव्या चण्डाली पुक्कसादिषु ॥ ५३ ॥
अङ्गारकारव्याधानां काष्ठयन्त्रोपजीविनाम् ।
योज्याशबरभाषातु किंचिद्वानौकसीतथा ॥ ५४ ॥
गवाश्वाजाविकोष्ट्रादि घोषस्थाननिवासिनाम् ।
आभीरोक्तिः शाबरी वा द्राविडी द्रविडादिषु ॥ ५५ ॥
सुरङ्गा खनकादीनां सौण्डीकाराश्च ( शौण्डिकानां ) रक्षिणाम् ।
व्यसने नायकानां स्यादात्मरक्षासु मागधी ॥ ५६ ॥
नवर्बर किरातान्ध्र द्रविडाद्यासु जातिषु ।
नाट्यप्रयोगे कर्तव्यं काव्ये भाषा समाश्रयम् ॥ ५७ ॥
गङ्गासागरमध्ये तु ये देशाः श्रुतिमागताः ।
एकारबहुलां तेषु भाषां तज्ज्ञः प्रयोजयेत् ॥ ५८ ॥
विन्ध्यसागरमध्ये तु ये देशाः श्रुतिमागताः ।
नकार बहुलां तेषु भाषां तज्ज्ञः प्रयोजयेत् ॥ ५९ ॥
सुराष्ट्रावन्तिदेशेषु वेत्रवत्युत्तरेषु च ।
ये देशास्तेषु कुर्वीत चकारबहुलामिह ॥ ६० ॥
हिमवत्सिन्धुसौवीरान्येच देशाः समाश्रिताः ।
उकार बहुलां तज्ज्ञस्तेषु भाषां प्रयोजयेत् ॥ ६१ ॥
चर्मण्वती नदीपारे ये चार्बुदसमाश्रिताः ।
तकार बहुलां नित्यं तेषु भाषां प्रयोजयेत् ॥ ६२ ॥
एवं भाषाविधानं तु कर्तव्यं नाटकाश्रयम् ।
अत्र नोक्तं मयायच्च लोकाद् ग्राह्यं बुधैस्तु तद् ॥ ६३ ॥

इति शम् ।

---

श्रीगणेशाय नमः ।

# प्राकृतप्रकाशः ।

जयति मदमुदितमधुकरमधुररुताकलनकूणितापाङ्गः ।
करविहितगण्डकण्डूविनोदसुखितो गणाधिपतिः ॥१॥
वररुचिरचितप्राकृतलक्षणसूत्राणि लक्ष्यमार्गेण ।
बुद्ध्वा चकार वृत्तिं संक्षिप्तां भामहः स्पष्टाम् ॥ २ ॥

## आदेरतः ॥ १ ॥

अधिकारोयम् । यदितऊर्द्ध्वमनुक्रमिष्याम आदेरतः स्थाने तद्भवतीत्येवं वेदितव्यम् । आदेरित्येतदाऽऽपरिच्छेदसमाप्तेः । अत इति च आकार विधानात्(१) । तकारग्रहणं सवर्णनिवृत्त्यर्थम् ॥ १ ॥

## आ समृद्ध्यादिषु वा ॥ २ ॥

समृद्धि इत्येवमादिषु शब्देष्वादेरकारस्याकारो भवति वा । समिद्धी सामिद्धी(२) । (१-२८ ऋ=इ ३-१ दलोपः ३-५० द्वित्वम् ३-५१ ध्=द् ५-१८ दीर्घः) । पअडं पाअडं (३-३ रलोपः २-२ कलोपः २-१० द्=ड् ५-३० बिन्दुः) अहिजाई आहिजाई (२-२७ भ्=ह् २-२ तलोपः ५-१८ दीर्घः) मणंसिणी,

---

(१) क्वचिद्-आ आकार विधानाद् पा०

(२) "अन्त्यस्य हलः" ४-६ इति सोर्लोपः एवं सर्वत्र सोर्लोपे बोध्यम् ॥

माणंसिणी । २-४२ न्=ण् ४-१.५ बिन्दुः ३-३ वूलोपः २-४२ न् ण्) पडि(१)वआ पाडिवआ । (३-३ र्लोपः २-१५ प्=व् २-२ दुलोपः) सरिच्छं सारिच्छं । (१-३१ ऋ=रि २-२ दुलोपः ३-३० क्ष=च्छ् ५-३० बिन्दुः) पडिसिद्धी पाडिसिद्धी । (३-३ रलोपः २-४३ ष्=स् ३-१ दुलोपः ३-५० द्वित्वम् ३-५१ ध्=द् ५-१८ दीर्घः) पसुत्तं पासुत्तं । (३-३ रलोपः ३-१ पलोपः ३-५० तुद्वित्वम् ५-३० बिन्दुः) । पसिद्धी पासिद्धी । (३-३ रलोपः २-२ दुलोपः ३-५० द्वित्वम् ३-५१ ध्=द् ५-१८ दीर्घः) अस्सो आसो(२) । (२-४३ श् स् ३-३ वलोपः ३-५८ द्वित्वम्(३) ५-१ ओ) समृद्धि, प्रकट, अभिजाति, मनस्विनी, प्रतिपदा(४) सदृक्ष, प्रतिषिद्धि,(५)प्रसुप्त, प्रसिद्धि, अश्व । आकृतिगणोयम् ॥ २ ॥

इदीषत्पक्वस्वप्नवेतसव्यजनमृदङ्गाऽङ्गारेषु ॥ ३ ॥

ईषदादिषु शब्देषु आदेरतः स्थाने इकारादेशो भवति वेति निवृत्तम् । इसि(६) (४-१ ई=इ २-४३ ष्=स् ४-६ अन्त्यलोपः)

(१) प्रत्यादौडः ८ । १ । २०६ इति हेमसूत्रेण तोडः । केचित्तु "प्रतिसरवेतसपताकासुडः" २-८ इतिसूत्रे प्रतिसरादयः प्रत्यादीनामुपलक्षणमिति वदन्ति ॥

(२) न दीर्घाऽनुस्वारात् ८ । २ । ९.२ इतिहेमसूत्रेण द्वित्वनिषेधः॥

(३) द्वित्वाभाव पक्षे असो ॥

(४) क. पुस्तके प्रतिपद् पाठ-स्तत्र-(४-७ द्=आ) ।

(५) पत्र प्रतिस्पर्द्धि पाठस्तत्र (२-३७ स्प=स्सि) इति विशेषः

(६) "ह्रस्वमीषत्पदे केश्चिदीकारस्यापि चेष्यते ।

पिक (३-१ वलोपः ३-५० कद्वित्वम् ५-३० बिन्दुः) सिविणो(१)(३-१ वलोपः ३-६२ विप्रकर्ष इकारताच २-४२ न्=ण ५-१ ओ) वेडिसो (२-८ त्=ड् ५-१ ओ) वअणो (३-२ यूलोपः २-२ जूलोपः २-४२ न् ण् ५-१ ओ) मिइङ्गो(२) (१-२८ ऋ=इ ४-१७ विन्दुः २-२ दूलोपः, ५-१ ओ) इङ्गालो (४-१७ विन्दुः २-३० र्=ल् ५-१ ओ) ॥ ३ ॥

लोपोऽरण्ये ॥ ४ ॥

अरण्यशब्दे आदेरतो लोपो भवति । रण्णं (३-२ यलोपः ३-५० द्वित्वम् ५-३० विंदुः) ॥ ४ ॥

ए शय्यादिषु ॥ ५ ॥

शय्या इत्येवमादिषु शब्देषु आदेरत एकारादेशो भवति । सेज्जा (२—४३ श्=स् ३—१७ र्य्=ज् ३—५० द्वित्वम् ) सुन्देरं । (४-१७ विन्दुः १-४४ औ=उ ३-१८ र्य्=र् ५-३० विन्दुः) उक्केरो (३-१ तलोपः ३-५० द्वित्वम् ५-१ ओ) तेरहो । (३-३ रलोपः २-२ यूलोपः ४-१ ओलोपः

---

इसि चुम्बिआमित्यादि रूपं तेन हि दृश्यते" । इत्यभियुक्ताः ॥

हेमस्तु ईसि इति मन्यते तथा च शाकुन्तले "ईसीसि चुम्बिआइं" इति प्रायो दीर्घादिर्लभ्यते ॥

( १ ) स्वप्ननीव्योर्वा ८ । १ । २५९ । सिमिणो । सिविणो । हे०

( २ ) इदुतौ वृष्टि वृष्ट पृथङ् मृदङ्ग नप्तृके ८ । १ । १३७ तेणाहिट्टं गीअं मुइङ्गि करताडिय मिइङ्गं ॥ हे०

का. पु. मुइङ्ग पाठे १-२९ सूत्रेणोत्वं बोध्यम्, तत्र गणे आदिग्रहणाद् ॥

२-१४ द्=र् २-४४ श्=ह् ५-१-ओ) अच्छेरं (४-१ आ=अ(१) ३-४० श्च्=छ् ३-५० द्वित्वम् ३-५१ छ्=च ३-१८ र्य्=र् ५-३० विन्दुः) पेरन्तं (३-१८ र्य्=र् ५-३० विन्दुः)। वेल्ली (२-३ ल्लोपः ३-५० द्वित्वम्)। शय्यासौन्दर्योत्करत्रयोदशाश्चर्यपर्यन्तवल्ल्यः ॥ ५ ॥

ओ बदरे देन ॥ ६ ॥

बदरशब्दे दकारेण सहादेरत ओत्वं भवति। बोरं (५-३० विन्दुः) ॥ ६ ॥

लवणनवमल्लिकयोर्वेन ॥ ७ ॥

लवणनवमल्लिकयोरादेरतो वकारेण सह ओकारः स्यात्। लोणं (५-३० विन्दुः) णोमल्लिआ (२-४२ न्=ण् २-२ क्लोपः) ॥ ७ ॥

मयूरमयूखयोर्य्वा वा ॥ ८ ॥

मयूर मयूख इत्येतयोर्यूशब्देन सहादेरत ओत्वं वा भवति। मोरो, मऊरो। (५-१ ओ) मोहो,मऊहो। (२-२७ ख्=ह् ५-१ ओ,) उभयत्र, पक्षे २-२ यलोपः ॥ ८ ॥

चतुर्थीचतुर्दश्योस्तुना ॥ ९ ॥

एतयोस्तुना सहादेरत ओत्वं भवति वा चोत्थी चउत्थी। (३-३ र् लोपः ३-५० थ्द्वित्वं ३-५१ थ्=त् , पक्षे २-२ तलोपो विशेषः) चोद्दही, चउद्दही(२)। (२-४४ श्=ह् शेषं पूर्ववद्) ॥९॥

---

(१) ह्रस्वः संयोगे ८।१।८४। तित्थम्। हे एवं सर्वत्र बोध्यम्॥

(२) क. पु. चतुर्थी तत्र चोत्थी, चउत्थी। चतुर्दशी तत्र चोद्दही, चउद्दही। पा० ॥

अदातो यथादिषु वा ॥ १० ॥

अत इति निवृत्तम् । स्थान्यन्तरनिर्देशात् । यथा इत्येवमादिषु आतः स्थाने अकारादेशो भवति वा । जह, जहा, तह, तहा । (२-२७ थ्=ह्) । पत्थरो, पत्थारो । ३-३ रलोपः ३-१२ स्त्=थ् ३-५० थ् द्वि० ३-५१ थ्=त् ५-१ ओ) पउअं, पाउअं । ३-३ रलोपः १-२९ ऋ=उ २-२ कतयोर्लोपः ५-३० विन्दुः) तलवेण्टअं, तालवेण्टअं । (१-२८ ऋ=इ(१) १-१२ इ=ए(२) ३-४५ न्त=ण्ट २-२ कलोपः ५-३० विं) उक्खअं, उक्खाअं । (३-१ तलोपः ३-५० खद्वि० ३-५१ ख्=क् २-२ तलोपः ५-३० विं) चमरं, चामरं । (५-३० विं) पहरो, पहारो । (३-३ रलोपः ५-१ ओ) चडु, चाडु । (२-२० ट्=ड्) दवग्गी, दावग्गी । (३-२ नलोपः ३-५० द्वि० ५-१८ दीर्घः) खइअं, खाइअं । (२-२ दलोपः । तलोपश्च ५-३० विं) संठविअं, संठाविअं । (८-२६ स्था=ठा ३-५६ द्वित्वनिषेधः २-१५ प्=व् २-२ तलोपः ५-३० विं) हलिओ, हालिओ । (२-२ कलोपः ५-१ ओ) । यथा तथाप्रस्तारप्राकृततालवृन्तकोत्खातचामरप्रहारचाटु दावाग्नि खादितसंस्थापितहालिकाः ॥ १० ॥

इत्सदादिषु ॥ ११ ॥

सदा इत्येवमादिष्वात इकारो भवति वा । सइ-सआ(२-२

---

( १ ) ऋष्यादेराकृतिगणत्वात् ॥

( २ ) संयोगपरत्वेन पिण्डसमत्वात् ।

"इदेदोवृन्ते" ८। १ । १३९ । विण्ट, वेण्ट वोण्ट । हे०

दलोपः ) एव मग्रिमेष्वपि । तइ, तआ । जइ, जआ । सदा, तदा, यदा, ॥ ११ ॥

इत एत् पिण्डसमेषु ॥ १२ ॥

पिण्ड इत्येवंसमेषु इकारस्यैकारादेशो भवति वा । पेण्डं, पिण्डं । (५–३० विं) णेद्दा,णिद्दा । (२–४२ न्=ण ३–३ रलोपः ३-५०द्वित्व०) सेंदूरं,सिंदूरं । (४–१७ वर्गान्तविं ५-३० विं) धम्मेल्लं, धम्मिल्लं । (५-३० विं) चेंधं, चिंधं। (३–३४ न्ह्=न्ध् ५–३० विं) वेण्हू, विण्हू । (३–३३ष्णु=ण्ह् ५–१८ दीर्घः) पेट्ठं, पिट्ठं (३–१० ष्ठ=ठ् ३–५० द्वि० ३–५१ ठ्=ट् ५–३० विं) पिण्ड निद्रा सिन्दूर धाम्मिल्ल चिन्ह विष्णु पिष्टानि । समग्रहणं संयोगपरस्योपलक्षणार्थम् ॥ १२ ॥

अत् पथिहरिद्रापृथिवीषु ॥ १३ ॥

पथ्यादिषुशब्देषु इकारस्याकारो भवति । पहो । (२-२७ थ्=ह् ४–६ नलोपः ५-१ ओ) हलद्दा ।(२–३० र्=ल् ३–३ रलोपः ३–५० द्वि०) पुहवी । (१-२९ ऋ=उ २–२७ थ्=ह्) ॥१३॥

इतेस्तः पदादेः ॥ १४ ॥

पदादेरितिशब्दस्य यस्तकारस्तस्मात् परस्येकारस्य अकारो भवति इअ (२–२ तलोपः) उअह(१), अण्णहा (३–२ य्लोपः २-४२ न्=ण् ३–५० णद्वि० २-२७ थ्=ह्) वअणं (२–२ चलोपः २–४२ न्=ण ५–३० विं) इअ, विअसन्तीउ ( २-२ कलोपः ५–२० जश्=उ) चिरम् । इतिपश्यतान्यथावचनम् । इति

---

( १ ) "उअ पश्य" ८ । २ । २११ पश्य देखव ॥ हे०

विकसन्त्यश्चिरम् । पदादेरिति वचनादिह न भवति । पिओ-
त्ति(१) । (३-३ रलोपः २-२ यलोपः ५-१ ओ ४-१ इलोपः)
प्रिय इति ॥ १४ ॥

उदिक्षुवृश्चिकयोः ॥ १५ ॥

इक्षुवृश्चिकयोरित उत्वं भवति । उच्छू (३-३० क्ष्=च्छ्
५-१८ दीर्घः) विच्छुओ (१-२८ ऋ=इ ३-४१ श्च्=च्छ् २-२
कलोपः ५-१ ओ) ॥ १५ ॥

ओ च द्विधा कृञः ॥ १६ ॥

कृञ्धातुप्रयोगे द्विधाशब्दस्यौ(२)कारो भवति चकारादुत्वं च ।
द्विधा कृतम् दोहाइअं दुहाइअं (३-३ वलोपः २-२७ ध्=ह् १-२८
ऋ=इ २-२ कतयोर्लोपः ५-३० विं० ) द्विधाक्रियते दोहाइज्जइ
दुहाइज्जइ ( ७-८ यक्=इज्ज ४-१ इलोपः ३-३ रलोपः २-२
कलोपः ७-१ त=इ ) ॥ १६ ॥

ईत् सिंहजिह्वयोश्च ॥ १७ ॥

एतयोरादेरिकारस्य ईकारो भवति । सीहो(३) (५-१ ओ)(४)
जीहा । (३-३ वलोपः) चकारोऽनुक्तसमुच्चयार्थः, तेन वीसत्थो
(३-३ वलोपः २-४३ श्=स् ३-१२ स्त=थ् ३-५० द्वि० ३-५१

---

( १ ) इतः स्वरात् तश्चाद्वि: । ८ । १ । ४२ पदात्परस्य इतेरादे-
र्लुग् भवति, स्वरात्परश्च तकारो द्विर्भवति । किन्ति जन्ति ॥ स्वरात्-
तहत्ति-झत्ति । पुरिसोत्ति । हे०

( २ ) क. पु. इत इत्यधिकः पाठः ॥

( ३ ) होघोऽनुस्वारात् ८ । १ । २६४ । सींहो सिंघो हे०

( ४ ) बाहुलकादनुस्वार निवृत्तिः साध्या ।

थ्=व् ५-१ ओ) वीसंभो (३-२ रलोपः २-४३ श्=स् ४-१७ विन्दुः ५-१ ओ ) इत्येवमादिषु ईत्वं भवति ॥ १७ ॥

इदीतः पानीयादिषु ॥ १८ ॥

पानीय इत्येवमादिष्वादेरीकारस्य इकारो भवति। पाणिअं (२-४२ न्=ण् २-२ य्लोपः ५-३० सोर्विन्दुः) अलिअं (२-२ कलोपः ५-३० विन्दुः) वलिअं(३-२ य्लोप २-२क्लोपः ५-३०विं०)तआणिं(२-२दलोपः२-४२ न्=ण् ४-१२=विन्दुः) करिसो (२-४३ ष्=स् ५-१ ओ) दुइअं (३-३ वलोपः ४-१ इ=उ २-२ त्लोपः। यलोपश्च ५-३० विन्दुः) तइअं (१-२७= ऋ=अ २-२ त्योर्लोपः ५-३० विन्दुः) गहिरं (२-२७ भ्=ह् ५-३० विन्दुः)। पानीयाऽलीकव्यलीकतदानींकरीषद्वितीयतृतीयगभीराः ॥ १८ ॥

एन्नीडापीडकीदृगीदृशेषु ॥ १९ ॥

नीडादिष्वीकारस्यैकारो भवति। णेडं (१) २-४२ न्=ण् ५-३० विन्दुः) आमेलो (२-१६ प्=म् २-२३ ड्=ल् ५-१ ओ ) केरिसो (१-३१ ऋ=रि २-२ दलोपः २-४३ श्=स् ५-१ ओ) एरिसो पूर्ववत् ॥ १९ ॥

उत ओत् तुण्डरूपेषु ॥ २० ॥

तुण्ड इत्येवंरूपेषु आदेरुकारस्यौकारो भवति। तोण्डं (५-३० विन्दुः)मोत्ता (२-२ कलोपः ३-५० द्वित्वम् )पोक्खरो (३-२९ ष्क्=ख् ३-५० द्वित्वं ३-५१ ख्=क् ५-१ ओ ( पोत्थओ

---

( १ ) का. पु. णेड्डु तत्र सेवादित्वाद्‌द्वित्वं ज्ञेयम् ॥

(३-१२ स्त्=थ् ३-५० द्वि० ३-५१ थ्=त् ५-१ ओ) क्षोद्धओ (३-३ वलोपः ३-५० द्वि० ३-५१ घ्=द् ५-१ ओ) कोट्टिमं । (५-३० विन्दुः) तुण्डमुक्तापुष्करपुस्तकलुब्धककुट्टिमानि । रूपग्रहणं संयोगपरोपलक्षणार्थम् ॥ २० ॥

उलूखले ल्वा वा(१) ॥ २१ ॥

उलूखलशब्दे लेन सह उकारस्यौकारो भवति वा । ओखलं उलूखलं ( ५-३० विन्दुः ॥ २१ ॥

अन्मुकुटादिषु ॥ २२ ॥

मुकुट इत्येवमादिष्वादेरुकारस्य स्थाने अकारो भवति(२) । मउडं (२-२ कलोपः २-२० ट्=ड् ५-३० विं०) मउलं (२-२ कलोपः ५-३० विं०) गरुअं (३) २-२ स्वार्थिकस्य लोपः ५-३० विं०) गरुई (३-३५ रस्यविप्रकर्षे उत्वं(४)च) जहिट्ठिलो (२-३१ य्=ज् २-२७ ध्=ह् ३-१ षलोपः ३-५० द्वि० ३-५१ ठ्=ट् २-३० र्=ल् ५-१ ओ) सो अमल्लं (१-४१ औ=ओ २-२ क्लोपः ४-१ आ=अ ३-२१ र्य्=ल् ३-५० द्वि० ५-३० विन्दुः) अवरि (२-१५ प्=व्) मुकुटमुकुलगुरुगुर्वीयुधिष्ठिरसौकुमार्योपरयः ॥ २२ ॥

---

(१) क्वचिद् "उदूखले द्वावा" पा० उदूखलं ॥

(२) का. पु. वेति निवृत्तम् इत्यधिक पाठभेदः प्रदर्शितः ॥

(३) ४-२५ सूत्रेण पाक्षिकः कः ॥

(४) तन्वीसमत्वात् । यद्वा, "अजातेः पुंसः" ८ । ३ । ३२ हेमसूत्रानुसाराद् संस्कृतवद् ङीपि वा ऽसन्धौ बोध्यम् ॥

इत्पुरुषे रोः ॥ २३ ॥

पुरुषशब्दे यो रुस्तस्य उकारस्य इकारो भवति। पुरिसो २-४३ ष्=स् ५-१ ओ ॥ २३ ॥

उदूतो मधूके ॥ २४ ॥

मधूकशब्दे ऊकारस्य उकारो भवति। महुअं (२-२७ ध्=ह् २-२ क्लोपः ५-३० बिन्दुः) ॥ २४ ॥

अद् दुकूले वा लस्य द्वित्वम् ॥ २५ ॥

दुकूलशब्दे ऊकारस्याकारो भवति वा, तत्संयोगेन लकारस्य द्वित्वम्। दुअल्लं दुऊलं (२-२ क्लोपः ५-३० बिन्दुः) ॥ २५ ॥

एन्नूपुरे ॥ २६ ॥

नूपुरशब्दे ऊकारस्य एकारो भवति। णेउरं (२-४२ न्=ण् २-२ प्लोपः ५-३० बिन्दुः) ॥ २६ ॥

ऋतोऽत् ॥ २७ ॥

आदेर्ऋकारस्याकारो भवति। तणं (२-४२ न्=ण ५-३० विं०) घणा (२-४२ न्=ण्) मअं (२-२ त्लोपः) ५-३० विं०) कअं (पूर्ववत्) वड्ढो (३-१ दलोपः ३-५० द्वि० ३-५१ ध्=ढ् ५-१ ओ) वसहो (२-४३ ष्=स् २-२७ भ्=ह् ५-१ ओ) तृणघृणामृतकृतवृद्धवृषभाः ॥ २७ ॥

इदृष्यादिषु ॥ २८ ॥

ऋष्यादिषु शब्देषु आदेर्ऋकारस्य इकारो भवति। इसी (२-४३ ष्=स् ५-१८ दीर्घः) विसी (पूर्ववत्) गिद्ठी (३-१० ष्ट=ठ् ३-५० द्वि० ३-५१ ठ्=ट ५-१८ दीर्घः)

दिट्ठी (पूर्ववत्) एवमुत्तरत्रापि । सिट्ठी । सिङ्गारो (२–४३ श्=स् ४-१७ वर्गान्तो वा ५–१ ओ) पिअंको (२-२ गलोपः ४–१ आ=अ ४–१७ वर्गान्तबिन्दुः ५-१ ओ) भिङ्गो (४-१७ ङ्=विं० ५–१ ओ) भिङ्गारो (पूर्ववत्) हिअअं (२–२ दयोर्लोपः ५–३० बिन्दुः) विइण्हो (२–२ तलोपः ३–३३ ष्ण्=ण्ह् ५–१ ओ) विंहिअं (२–२ तलोपः ५–३० विं) किसरो (२–४३ श्=स् ५–१ ओ) किच्चा (३–२७ त्य्=च् ३–५० द्वि० ) विच्छुओ (१–१५ सू० स्प०(१) सिआलो (२-४३ श्=स् २–२ गलोपः ५-१ ओ) किई (२–२ तलोपः ५–१८ दीर्घः) किसी । (२–४३ ष्=स् ५–१८ दीर्घः) किवा (१–१५ प्=व्) ऋषिवृषीगृष्टिदृष्टिसृष्टिशृङ्गारमृगाङ्कभृङ्गभृङ्गारहृदयवितृष्णबृंहितकृशरकृत्यावृश्चिकशृगालकृतिकृषिकृपाः ॥ २८ ॥

उदृत्वादिषु ॥ २९ ॥

ऋतु इत्येवमादिषु आदेर्ऋत उकारो भवति । उदू (२–७ त्=द् ५–१८ दी० ) मुणालो (२–४२ न्=ण् ५–१ ओ) पुहवी (१–१३ सू० स्प०) वुंदावणं (४–१७ विं० २–४२ न्=ण् ५=३० विं०) पाउसो (३–३ रलोपः वलोपश्च ४–११ ष्=स ४–१८ पुंवत् ५–१ ओ) पउत्ती (३–३ रलोपो वलोपश्च ३–१

---

(१) का० पु० विचुओ इति पाठभेदे प्रदर्शितस्तत्र "वृश्चिके श्चे ञ्चुर्वा" ८ । २ । १६ छापवादः विञ्चुओ, विंचुओ । पक्षे विच्छिओ । इति हेमानुसारिणी प्रक्रियाऽनुसर्तव्या ।

तलोपः ३-५० द्वि० ५-१८ दी०) णिउदं (२-४२ न्=ण् २-२ वलोपः २-७ त्=द् ५-३० विं०) संबुदं (२-७ त्=द् ५-३० विं०) णिव्वुदं (२-४२ न्=ण् ३-३ र्लोपः ३-५० द्वि० २-७ त्=द् ५-३० विं) वुत्तंतो (३-१ तलोपः ३-५० द्वि० ४-१ आ=अ ४-१७ न्=विं० ५-१ ओ) परहुओ (२-२७ भ्=ह् २-२ त्लोपः ५-१ ओ) माउओ (२-२ त्लोपः २-२ क्लोपः ५-१ ओ) । जामाउओ । (पूर्ववत्) ऋतु, मृणाल, पृथिवी वृन्दावन, प्रावृष्, प्रवृत्ति, निवृत, (१)संवृत, निर्वृत, वृत्तान्त, परभृत, मातृक, (२)जामातृक, इत्येवमादयः ॥ २९ ॥

ऋ रीति ॥ ३० ॥

वर्णान्तरेणायुक्तस्यादेर्ऋकारस्य रिकारो भवति । रिणं (५-३० विं०) रिद्धो (३-१ दलोपः ३-५० द्वि० ३-५१ ध्=द् ५-१ ओ) रिच्छो ( ३-३० क्ष्=छ शे० पू०(३) ॥३०॥

क्वचिद्युक्तस्यापि ॥ ३१ ॥

वर्णान्तरेण युक्तस्यापि क्वचिदृकारस्य रिकारो भवति । एरिसो (१-१९ ई=ए २-२ दलोपः २-४३ श्=स् ५-१ ओ) सरिसो, तारिसो । एरिसोवत्(४) ॥ ३१ ॥

(१) क० पु० विवृत्त पाठः । विउदं प्रा० ।

(२) क० पु० भ्रातृक इत्यधिकः पाठः । भाउओ इति प्रा० ।

(३) क० पु० ऋणं, ऋद्धं, ऋच्छ इत्येव मादयः अ० पा० । केचिद् ऋक्षं पठन्ति ।

(४) क० पु० ईदृश, सदृश, तादृश, कीदृश इत्येव मादयः । केरिसो प्रा० । अ० पा० ।

वृक्षे वेन रुर्वा ॥ ३२ ॥

वृक्षशब्दे वशब्देन सह ऋकारस्य रुकारो भवति वा । रुक्खो (३-२९ क्ष्=ख् ३-५० द्वि० ३-५१ ख्=क् ५-१ ओ) वच्छ (१-२७ ऋ=अ ३-३१ क्ष्=छ् शे० पू०) व्यवस्थितविभाषाज्ञापनाच्छत्वपक्षे न भवति खत्वपक्षे तु नित्यमेव भवति॥३२॥

ऌतः क्लृप्त इलिः ॥ ३३ ॥

क्लृप्तशब्दे ऌकारस्य इलीत्ययमादेशो भवति । किलित्तं । (३-१ प्लोपः ३-५० द्वि० ५-३० विं०) तदेवमादेशान्तरविधानात्प्राकृते ऋकारऌकारौ न भवतः ॥ ३३ ॥

एत इद्वेदनादेवरयोः ॥ ३४ ॥

वेदनादेवरयोरेकारस्य इकारो भवति । विअणा (२-२ द्लोपः २-४२ न्=ण्) दिअरो । (२-२ व्लोपः ५-१ ओ) वाग्रहणानुवृत्तेः क्वचिद् वेअणा, देअरो इत्यपि ॥ ३४ ॥

ऐत एत् ॥ ३५ ॥

आदेरैकारस्य एकारो भवति । सेलो (२-४३ श्=स् ५-१ ओ) सेच्चं (२-४३ श्=स् ३-२७ त्य्=च् ३-५० द्वि० ५-३० विं०) एरावणो, केलासो (५-१ ओ) तेल्लोक्कं । (३- ३ र्लोपः ३-५८ ल्=द्वि० ३-२ य्लोपः ३-५० क्द्वि० शैलशैत्यैरावणकैलासत्रैलोक्यानि ॥ ३५ ॥

दैत्यादिष्वइ ॥ ३६ ॥

दैत्यादिषु शब्देषु ऐकारस्य अइ इत्ययमादेशो भवति । दइच्चो ( ३-२७ त्य् च् ३-५० द्वि० ५-१ ओ ) चइत्तो

(३-३ रलोपः ३-५० द्वि० ५-१ ओ) भइरवो ( ५-१ ओ ) सइरं (३-३ वलोपः ५-३० विन्दुः) वइरं (५-३० विं०) वइदेसो (२-४३ श्=स् ५-१ ओ) वइदेहो (५-१ ओ) कइअवो (२-२ त्लोपः ५-१ ओ) वइसाहो (२-४३ श्=स् २-२७ ख्-ह् ५-१ ओ) वइसिओ २-४३ श्=स् २-२ कलोपः ५-१ ओ) वइसंपाअण(१)(२-४३ श्=स् ४-१७ विं० २-२ यलोपः २-४२ न्=ण् )५-२७ ओत्वनिषेधः ४-६ सोर्लोपः दैत्यचैत्रभैरवस्वैरवैरवैदेशवैदेहकैतववैशाखवैशिकवैशम्पायनाः । इत्यादयः ॥ ३६ ॥

दैवे वा ॥ ३७ ॥

दैवशब्दे ऐकारस्य अइ इत्ययमादेशो भवति वा । दइवं(२) (५-३० विं० ) देव्वं ( पूर्ववत् ) । अनादेशपक्षे नीडादित्वाद् द्वित्वम् ॥ ३७ ॥

इत्सैन्धवे ॥ ३८ ॥

सैन्धवशब्दे ऐकारस्य इकारो भवति । सिंधवं (४-१७ न्=विं० ५-३० विं० ) ॥ ३८ ॥

ईद् धैर्ये ॥ ३९ ॥

धैर्यशब्दे ऐकारस्य ईकारो भवति । धीरं ( ३-१८ र्य=र ५-३० विं० ) ॥ ३९ ॥

---

( १ ) क० पु० वइसम्पाइणो पा० ।

( २ ) क्वचिद् दइव्वं पाठः स तु भ्रममूलकः । विभाषासु व्यवस्थितविभाषाश्रयणादनादेश पक्षे नित्यमेव आदेशपक्षे नेति मूल एव स्फुटं वक्ष्यमाणत्वाद् ॥

ओतोद्वा प्रकोष्ठे कस्य वः ॥ ४० ॥

प्रकोष्ठशब्दे ओकारस्य अकारो भवति वा तत्संयोगेन च ककारस्य वत्वम् । पवट्ठो । ( ३-३ र्लोपः ३-१० ष्ठ्=ठ् ३-५० द्वि० ३-५१ ठ=ट् ५-१ ओ ) पओट्ठो २-२ कलोपः शेषं पूर्ववत् ॥ ४० ॥

औत ओत् ॥ ४१ ॥

औकारस्यादेरोकारो भवति । कोमुई ( २-२ दुलोपः ) जोव्वणं (२-३१ य्=ज् ३-५० द्वि० २-४२ न्=ण् ५-३० विं) कोत्थुहो (३-१२ स्त्=थ् ३-५० द्वि ३-५१ थ्=त् २-२७ भ्=ह् ५-१ ओ) कोसम्बी । (२-४३ श्=स् ४-१७ विं० ४-१ ह्रस्वः) कौमुदी, यौवनम् , कौस्तुभः, कौशाम्बी॥४०॥

पौरादिष्वउ ॥ ४२ ॥

पौर इत्येवमादिषु शब्देषु औकारस्य अउ इत्ययमादेशो भवति । पउरो (५-१ ओ) एवमुत्तरत्र । कउरवो । पउरिसो (शेषं १-२३ सू० स्प०) पौरकौरवपौरुषाणि । आकृतिगणोऽयम् । कौशाके विकल्पः । कोसलो, कउसलो । कौशलम् ॥४२॥

आ च गौरवे ॥ ४३ ॥

गौरवशब्दे औकारस्य आकारो भवति । चकारादउत्वं-च ॥ गारवं गउरवं (५-३० विन्दुः) ॥ ४२ ॥

उत्सौन्दर्यादिषु ॥ ४४ ॥

इति वररुचिकृतप्राकृतसूत्रेषु अज्विधिर्नाम

प्रथमः परिच्छेदः ॥

सौन्दर्य इत्येवमादिषु औकारस्य उकारो भवति। सुन्देरं (१-५ सू० स्प०) मुञ्जाअणो (४-१७ पञ्चमः २-२ यूलोपः २-४२ नू=णू ५-१ ओ) सुण्डो (२-४३ शू=सू ४-१७ पञ्चमः ५-१ ओ) कुक्खेअओ (३-२९ क्ष=खू ३-५० द्वि० ३-५१-खू=कू २-२ यकयोर्लोपः ५-१ ओ) दुव्वारिओ (३-५२ वू=व्वू २-२ कूलोपः ५-१ ओ) सौन्दर्यमौञ्जायनशौण्डकौक्षेयकदौवारिकाः ॥ ४४ ॥

इति भामहविरचिते प्राकृतप्रकाशे प्रथमः परिच्छेदः।

---

# अथ द्वितीयः परिच्छेदः।

अयुक्तस्यानादौ ॥ १ ॥

अधिकारोऽयम्। इत उत्तरं यद्वक्ष्यामस्तदयुक्तस्यव्यञ्जनस्यानादौवर्तमानस्य कार्यं भवतीत्येवं वेदितव्यम्। वक्ष्यति कादीनां लोपः। मउडं। (१-२२ सू०स्प०) अयुक्तस्येति किम्। अग्घो (३-३ रूलोपः ३-५० घूद्वि० ३-५१ घू=गू ५-१ ओ) अक्को(१) (पूर्ववत्) आनादौ इति किम्। कमलं(२)। अयुक्तस्येत्यापरिच्छेदसमाप्तेः। अनादाविति च, आज(३) काराविधानात् ॥ १ ॥

---

(१) क० पु० अर्घः। अर्कः ॥ सं०।

(२) क० पु० कङ्कणं। अ० पा०।

(३) "आदेर्योजः" इति सूत्र पर्यन्तामित्यर्थः ॥

कगचजतदपयवां प्रायोलोपः ॥ २ ॥

कादीनां नवानां वर्णानामयुक्तानामनादौ वर्तमानानां प्रायो बाहुल्येनलोपो भवति(१)। कस्य तावत् , मउलो ( १–२२ सू० स्प० ५–१ ओ ) णउलं। ( २–४२ न्=ण् ५–३० विन्दुः ) गस्य, साअरो (५–१ओ) णअरं। (२–४२ न्=ण् ५–३०विं०) चस्य, वअणं ( २–४२ न्=ण् ५–३० विन्दुः ) सूई। जस्य, गओ ( ५–१ ओ ) रअदं। ( २–७ त्=द् ५–३० विन्दुः ) तस्य, कअं ( १–२७ ऋ=अ ५–३० विन्दुः ) विआणं। (२–४२ न्=ण् ५–३० विन्दुः) दस्य, गआ। मओ। (५–१ओ) पस्य, कई। ( ५–१८ दी० ) विउलं ( ५–३० विन्दुः ) सुउरिसो ( १–२३ सू० स्प० ) सुपुरुष इति यद्यपि उत्तरपदस्य-पुरुषशब्दस्यादि(२)स्तथापिलोपो भवतीत्यनेनज्ञापयति वृत्तिकारः–यथा "उत्तरपदादिरनादिरेव" इति। यस्य, वाऊ ( ५–१८ दी० ) णअलं। ( २–४२ उभयत्रणत्वम् ५–३० विन्दुः ) वस्य, जीअं(३) ( ५–३० विन्दुः ) दिअहो। ( २–४७ स्=ह् ५–१ ओ ) मुकुलनकुलसागरनगरवचनसूचीगजरजतकृतविता-नगदामदकपिविपुलसुपुरुषवायु(४)नयनजीवदिवसाः। प्रायो-

---

( १ ) प्रायो ग्रहणात्क्वचिदादेरपि। सपुनः–सउण। क्वाचिच्च-स्यजः, पिशाची–पिसाजी। कस्यगः, एकत्वम्–एगत्वं। इत्यादौ बाहुलकात। आर्षे—आकुञ्चनम्। हे०।

( २ ) क० पु० आदिर्य स्तथापि। अ० पा०।

( ३ ) क० पु० जीओ–पाठः।

( ४ ) क० पु० कायः। काओ। प्रा० ॥ अ० पा०।

ग्रहणाद्यत्र श्रुतिसुखमस्ति तत्र(१) न भवत्येव। सुकुसुमं (५-३० विन्दुः) पिअगमणं (३-३ र्लोपः २-४२ न्=ण् ५-३० विन्दुः) सचावं। अवजलं। (२-१५ प्=व् ५-३० विं०) अतुलं (५-३० विं०) आदरो (५-१ ओ) अपारो (५-१ ओ) अजसो (२-३१ य्=ज् २-४२ श्-स् ४-१८ पुम्वत्-४-६ अन्त्यलोपः ५-१ ओ) सबहुमाणं (२-४२ न्=ण् ५-३० विं०) सुकुसुमप्रियगमनसचापाऽपजलाऽतुलाऽऽदराऽपाराऽयशस्सबहुमानानि। अयुक्तस्येत्येव। (२)सक्को (२-४३ श्=स् ३-३ र्लोपः ३-५० द्वि० ५-१ ओ) मग्गो। (४-१ आ=अ ३-३ र्लोपः ३-५० द्वि०५-१ ओ) शक्रः। मार्गः। अनादावित्येव। कालो गन्धो। (५-१ ओ उभयत्र) कालः। गन्धः॥ २॥

यमुनायां मस्य॥ ३॥

यमुनाशब्दे मकारस्य लोपो भवति। जउणा (२-३१ य्=ज् २-४२ न्=ण्)॥ ३॥

---

(१) क० पु० तत्र लोपो न भवत्येवेति। तेन-अ० पा०।

(२) क० पु० तत्र-सक्को,। मग्गो, अच्चा, अज्जुणो, अत्तवा* त्ता, रुद्दो, सुद्दो सप्पो, दप्पो, अज्जो, सुज्जो, गव्वो। शक्र, मार्ग, अर्चा, अर्जुन, आर्तवार्ता, रुद्र, शूद्र, सर्प, दर्प, आर्य, सूर्य, गर्व इति अ०पा०॥

* बाहुलकान्न ह्रस्वः।

स्फटिकनिकषचिकुरेषु कस्य हः ॥ ४ ॥

अनादाविति वर्तते । एषु कस्य हकारो भवति ॥ लोपापवादः । फलिहो ( ३-१ सूलोपः २-२२ ट्=ल् ५-१ ओ ) णिहसो ( २-४२ न्=ण् २-४३ ष्=स् ५-१ ओ ) चिहुरो (५-१ ओ) ॥ ४ ॥

शीकरे भः ॥ ५ ॥

शीकरशब्दे ककारस्य भकारो भवति । सीभरो । (२-४३ श्=स् ५-१ ओ) ॥ ५ ॥

चन्द्रिकायां मः ॥ ६ ॥

चन्द्रिकाशब्दे ककारस्य मकारो भवति । चंदिमा ( ३-३ र्लोपः ४-१७ विन्दुः ३-५६ द्वित्वनिषेधः ) ॥ ६ ॥

ऋत्वादिषु तो दः(१) ॥ ७ ॥

ऋतु इत्येवमादिषु तकारस्य दकारो भवति (२)उदू (१-२९सू० स्य०)। रअदं (२-२ जूलोपः ५-३० विं०) आअदो (२-२ गूलोपः ५-१ ओ) णिव्वुदी (२-४२ न्=ण् ३-३ रूलोपः ३-५० द्वि० १-२९ ऋ=उ ५-१८ दी०) आउदी (२-२ वूलोपः १-२९ ऋ=उ ५-१८ दी०) संबुदी (प्रायोग्रहणात् वूलोपो न शे० पू० ४-१२ मूविन्दुः) सुइदी (२-२ कूलोपः १-२८ ऋ=इ ५-१८ दी० एव मुत्तरत्रापि) आइदी । हदो (५-१ ओ)

(१) "ऋत्वादिषु" शौरसेनी मागधी विषय एव । प्राकृते तु रिऊ उऊ ।

(२) क. पु. तकारोपादानं जमादीनां जकारादे र्माभूदित्यर्थः । अ० पा०

सअदो (२-३१ य्=ज् ५-१ ओ) विउदं (२-२ वृलोपः १-२९ ऋ=उ ५-३० विन्दुः) सआदो (सअदोवत्) संपदि (४-१२ म्बिन्दुः ३-३ र्लोपः ३-५६ द्वित्वनिषेधः) पडिवद्दी। (३-३ र्लोपः २-८ त्=द् २-१५ प्=व् ३-१ त्लोपः तकारस्य दकारेकृते ३-५० द्वि० ५-१८ दी०) ऋतुरजतागतनिर्वृत्याहृतिसंवृतिसुकृत्याकृतिहतसंयतविवृतसंयातसम्प्रतिप्रतिपत्तयः॥७॥

**प्रतिसरवेतसपताकासु डः(१) ॥ ८ ॥**

एषु शब्देषु तकारस्य डकारो भवति। लोपापवादः पडिसरो (३-३ र्लोपः ५-१ ओ) वेडिसो (१-३ अ=इ ५-१ ओ) पडा·आ (२·२ कूलोपः) ॥ ८ ॥

**वसतिभरतयोर्हः ॥ ९ ॥**

वसतिभरतशब्दयोः तकारस्य हकारो भवति। वसही (५-१८ दी० ) भरहो ( ५-१ ओ ) ॥ ९ ॥

**गर्भिते णः ॥ १० ॥**

गर्भितशब्दे तकारस्य णकारो भवति। गब्भिणं (३-३ र्लोपः ३-५० द्वि० ३-५१ भ्=ब् ५-३० बिन्दुः)(२) ॥१०॥

**ऐरावते च ॥ ११ ॥**

ऐरावतशब्दे तकारस्य णकारो भवति। एरावणो (१-३५ ऐ-ए ५-१ ओ) ॥ ११ ॥

---

( १ ) प्रति वेतसपताकासु डः-प्रते रुपसर्गस्य वेतसपताकयो श्च यं स्तकारस्तस्य डकारः स्यात्। पडिवाआ। पडिच्छन्दो पडिसरो। पडिकूलो। इत्यादि। वृगजेति लोपापवादः। इति केचित्पठन्ति।

( २ ) रुदिते दिना ण्णः ८। १। २०९ रुण्णं। हे०

प्रदीप्तकदम्बदोहदेषु दो लः ॥ १२ ॥

एषु शब्देषु दकारस्य लकारो भवति । पलित्तं (३-३ र्लोपः ४-१ ई=इ ३-१ प्लोपः ३-५० तद्वि० ५-३० विन्दुः) कलंबो (४-१७ विं० ५-१ ओ) दोहलो (५-१ ओ) ॥१२॥

गद्गदे रः ॥ १३ ॥

गद्गदशब्दे दकारस्य रेफादेशो भवति । गग्गरो ( ३-१ द्लोपः ३-५० ग्द्वि० ५-१ ओ) ॥ १३ ॥

संख्यायाश्च ॥ १४ ॥

संख्यावाचिनि शब्दे यो दकारस्तस्य रेफादेशो भवति । एआरह (२-२ क्लोपः २-४४ श्=ह्) वारह (३-१ द्लोपः शेषंपूर्ववत्) तेरह । (१-५ सूत्रे द्रष्टव्यम्) एकादश द्वादश त्रयोदश । अयुक्तस्येत्येव । नेह चउद्दह ( १-९ सू० ५७० ) ॥१४॥

पो वः ॥ १५ ॥

पकारस्यायुक्तस्यानादिवर्तिनो वकारादेशो भवति । सावो (२-४३ श्=स् ५-१ ओ) सवहो (२-२७ थ्=ह् शे० पूर्ववत्) उलवो । (५-१ ओ) शापः शपथः उलपः । प्रायोग्रहणाद्यत्र लोपो(१) न भवति तत्रायं विधिः ॥ १५ ॥

आपीडे मः ॥ १६ ॥

आपीडशब्दे पकारस्य मकारो भवति । आमेलो (१-१९ ई=ए १ २३ ड्=ल् ५-१ ओ) ॥ १६ ॥

---

( १ ) कगचेजेत्यादिना प्लोप इत्यर्थः ।

उत्तरीयानीययोर्ज्जो वा(१) ॥ १७ ॥

उत्तरीयशब्देऽनीयप्रत्ययान्ते च यस्य ज्जो भवति वा। उत्तरीअं (२-२ यूलोपः ५-३० विं०) एव मुत्तरत्रापि। उत्तरिज्जं। रमणीअं। रमणिज्जं। भरणीअं। भरणिज्जं ॥ १७ ॥

छायायां हः ॥ १८ ॥

छायाशब्दे यकारस्य हकारो भवति। छाहा ॥ १८ ॥

कबन्धे बो मः ॥ १९ ॥

कबन्धशब्दे बकारस्य मकारो भवति। कमन्धो (४-१७ विं० ५-१ ओ) ॥ १९ ॥

टो डः ॥ २० ॥

टस्यानादिवर्तिनो डकारो भवति। णडो (२-४२ न्=ण् ५-१ ओ) विडओ (२-१५ प्=व् ५-१ ओ) नटः। विटपः ॥ २० ॥

सटाशकटकैटभेषु ढः ॥ २१ ॥

एतेषु टकारस्य ढकारो भवति। सढा, सअढो (२-२ क्-लोपः ५-१ ओ) केढवो (१-३५ ऐ=ए २-२९ भ्=व् ५-१ ओ) ॥ २१ ॥

स्फटिके लः ॥ २२ ॥

स्फटिकशब्दे टकारस्य लकारो भवति। फलिहो (३-१ सलोपः २-४ क्=ह् ५-१ ओ) ॥ २२ ॥

---

(१) क. पु. उत्तरीयानीययो र्यस्य ज्जो वा। सु० पा०। आरम-णिज्जं, आकरणिज्जं। अ० पा०। उत्तरीयानीययो र्यो ज्जो वा। इति केचित्।

डस्य च ॥ २३ ॥

डकारस्यायुक्तस्यानादिभूतस्य ळकारो भवति । दाळिमं (५-३० विं०) तळाअं (२-२ गूलोपः ५-३० विं०) वळही । (२-२७ भू=हू) प्राय इत्येव(१) । दाडिमं (५-३० विं०) वडिसं (२-४३ श्=स् ५-३० विं०) णिविडो (२-४२ न्=ण् ५-१ ओ) दाडिमः । तडागः वळभी । वडिशं । निविडं ॥ २३ ॥

ठो ढः ॥ २४ ॥

ठकारस्यायुक्तस्यानादिभूतस्य ढकारो भवति । मढं (५-३० विं०) एवमग्रेऽपि जढरं कढोरं । मठः । जठरं । कठोरं ॥ २४ ॥

अङ्कोले ल्लः ॥ २५ ॥

अङ्कोल शब्दे लकारस्य ल्लकारो भवति । अङ्कोल्लो ५-१ ओ)(२) ॥ २५ ॥

फो भः ॥ २६ ॥

फकारस्यायुक्तस्यानादिभूतस्य भकारो भवति । सिभा (२-४३ श्=स्) सेभालिआ (२-२ क्लोपः) सभरी (२-४३ श्=स्) सभलं (५-३० विं०)(३) ॥ २६ ॥

खघथधभां हः ॥ २७ ॥

खादीनामपञ्चानामयुक्तानामनादिवर्तिना हकारो भवति ।

---

(१) क्वचिल्लकारो न भवतीत्यर्थः ।

(२) क० पु० अङ्कोटेलः-अङ्कोटशब्दे टकारस्य लकारो भवति । अंकोल्लो ।

(३) क० पु० अयुक्तस्येति किम् । तवप्फलं । अनादाविति किम् । फलिहो । अ० पा० ।

खस्य तावत्, मुहं (५–३० विं०) मेहला। घस्य, मेहो, (५-१ ओ) जहणं (२–४२ न्=ण् ५–३० विं०) थस्य गाहा। सवहो (२–१५ सू० स्प०)। धस्य, राहा। व-हिरो (५–१ ओ) भस्य, सहा। रासहो (५-१ ओ) प्राय इत्येव,(१) पखलो (३–३ र्लोपः ५–१ ओ) पलंघणो (३–३ र्लोपः ४–१७ वर्गान्त० २–४२ न्=ण् ५–१ ओ) अधी-रो (५–१ ओ) अधणो (२–४२ न्=ण् ५–१ ओ) उवलद्धभावो (२–१५ प्=व् ३–३ व्लोपः ३–५० धृद्वि० ३–५१ ध्=द् प्रायोग्रहणात् न व्लोपः ५–१ ओ) मुखम्, मेखला, मेघः जघनं, गाथा, शपथः, राधा, बधिरः, सभा, रासभः, प्रखलः, प्रलङ्घनः, अधीरः अधनः उपलब्धभावः॥ २७॥

प्रथमशिथिलनिषधेषु ढः॥ २८॥

एतेषु थधयोर्ढकारो भवति। पढमो (३–३ र्लोपः ५–१ ओ) सिढिलो (२–४३ श्=स् ५–१ ओ) णिसढो (२–४२ ष्=स् शे० पूर्ववत्)॥ २८॥

कैटभेवः॥ २९॥

कैटभशब्दे भकारस्य वकारो भवति। केढवो (१–३५ ऐ=ए २–२१ ट्=ढ् ५–१ ओ)॥ २९॥

हरिद्रादीनां रो लः॥ ३०॥

हरिद्रा, इत्येवमादीनां रेफस्य लकारो भवति। हलद्दा (१-१३ इ=अ ३–३ र्लोपः ३–५० दृद्वि० ५–२४ आत्वं बाहु-

---

(१) क्वचिद् हकारो नेत्यर्थः।

स्यात्) चळणो (२-४२ न्=ण् ५-१ ओ) मुहलो (५-२७ख्=ह् ५-१ ओ) जहिट्ठिलो (१-२२ सू० स्प०) सोमालो(१) (५-१ ओ) कलुणं (प्रायोग्रहणात्कलोपाभावः ५-३० विं०) अङ्गुली (स्पष्टम्) इंगालो(४-१७ विं० ५-१ ओ) चिलादो(२-३३ क्=च् २-७ त्-द्-५-१ ओ) फलिहा (२-३६ प्=फ् २-२७ ख-ह्) फलिहो (५-१ ओ शे० पूर्ववत्) हरिद्रा, चरण, मुखर, युधिष्ठिर, सुकुमार, करुण, अङ्गुरी, अङ्गार, किरात, परिखा, परिघ, इत्येवमादयः ॥ ३० ॥

आदेर्योजः ॥ ३१ ॥

अनादेरिति निवृत्तम् । आदिभूतस्य यकारस्य जकारो भवति । जट्ठी (३-१० ष्ट्=ठ् ३-५० ठ्द्वि० ३-५१ ठ्=ट् ५-१८ दीर्घः) जसो (२-४३ श्=स् ४-६ मलोपः ४-१८ पुंस्त्वं ५-१ ओ) जक्खो । (३-२९ क्ष्=ख् ३-५० ख्द्वि० ३-५१ ख्=क्- ५-१ ओ) यष्टिः, यशः यक्षः ॥ ३१ ॥

यष्ट्यां लः ॥ ३२ ॥

यष्टिशब्दे यकारस्य लकारो भवति लट्ठी (जट्ठीवत्)॥३२॥

किरातेचः ॥ ३३ ॥

किरातशब्दे आदेर्वर्णस्य चकारो भवति । चिलादो (२-३०

---

(१) नवा मयूख लवण चतुर्गुण चतुर्थ चतुर्दश चतुर्वार सुकुमार कुतूहलो दूखलो लूखले ८।१।१७१ मयूखादिष्वादेः स्वरस्य परेण सस्वरव्यञ्जनेन सह ओद् वा भवति । मोहो, मऊहो इत्यादि । हेम० । पक्षे-सुउमालो ।

सू० स्प०)(१) ॥ ३३ ॥

कुब्जे खः ॥ ३४ ॥

कुब्जशब्दे आदेर्वर्णस्य खकारो भवति । खुज्जो (२)(३-३ ब्लोपः ३-५० ज्‌द्वि० ५-१ ओ) ॥ ३४ ॥

दोलादण्डदशनेषु डः(३) ॥ ३५ ॥

एषु आदेर्वर्णस्य डकारो भवति । डोला । डंडो (५-१ ओ) डसणो (२-४३ श्=स् २-४२ न्=ण् ५-१ ओत्वं ) ॥ ३५ ॥

परुषपरिघपरिखासु फः(४) ॥ ३६ ॥

एतेषु आदेर्वर्णस्य फकारो भवति । फरुसो (२-४३ ष्=स ५-१ ओ) फलिहो, फलिहा (२-३० सू० स्प०) ॥ ३६ ॥

पनसेऽपि ॥ ३७ ॥

पनसशब्देऽपि पकारस्य फकारो भवति ) फणसो (२-४२ न्=ण् ५-१ ओत्वं ॥ ३७ ॥

बिसिन्यां भः ॥ ३८ ॥

बिसिनीशब्दे आदेर्वर्णस्य भकारो भवति । भिसिणी ।

---

( १ ) चिलाओ, पुलिन्द एवायं विधिः । तेन कामरूपिणि नेष्य-ते । नमिमो हरकिरायं-इति हे० ।

( २ ) क० पु० खज्जो । पा० ।

( ३ ) दशन दष्ट दग्ध दोला दण्ड दर दाह दम्भ दर्भ कदन दोहदे दो वा डः ८ । १ । २१७ एषु दस्य डोवा भवति ॥ हे० ।

( ४ ) परुष पलितपरिखासु फः-इति पाठे पलितेत्यपपाठः प्रतीयते । पलिते वा ८ । १ । २१२ पलिलं । पलिअ । हेम० इत्युदाहृतम् ।

(२-४२ न्=ण् ) स्त्रीलिङ्गनिर्देशादिह न भवति ।बिसं (२-४३ ष्=स् ५-३० विं०) । ३८ ॥

**मन्मथे वः ॥ ३९ ॥**

मन्मथशब्दे आदेर्वर्णस्य वकारो भवति । विम्महो (३-४३ न्म्=म् ३-५० द्वि० २-२७ थ्=ह् ५-१ ओत्वं) ॥ ३९ ॥

**लाहले णः ॥ ४० ॥**

लाहलशब्दे आदेर्वर्णस्य णकारो भवति । णाहलो ( ओत्वं पू० ) ॥ ४० ॥

**षट्शावकसप्तपर्णानां छः ॥ ४१ ॥**

एतेषामादेर्वर्णस्य छकारो भवति । छट्ठी (३-१० ष्ट्=ठ् शे० २-३१ सू० स्प०) छम्मुहो (१०-५* ण=न् ३-४३ न्म्=म् ३-५० द्वि० २-२७ ख्=ह् ५-१ ओ०) छावओ (२-२ क्लोपः ५-१ ओ) छत्तवण्णो) ३-१ प्लोपः ३-५० त्द्वि० २-१५ प्=व् ३-३ र्लोपः ३-५० ण्द्वि० ५-१ ओ) । षष्ठी षण्मुखः शावकः सप्तपर्णः ॥४१॥

**नो णः सर्वत्र ॥ ४२ ॥**

आदेरिति निवृत्तम्(१) । सर्वत्र नकारस्य णकारो भवति(२) । णई (२-२ द्लोपः ५-१८ दीर्घः) कणअं (२-२ क्लोपः ५-३० विं०) वअणं (२-२ च्लोपः २-४२ न्=ण् ५-३० विं०) माणंसिणी (१-२ सू० स्प०) नदी । कनकं । वचनं । मनस्विनी ॥ ४२ ॥

---

( * ) व्यत्ययात्प्राकृतेऽपि । ( १ ) सर्वत्रेति ग्रहणात् ।

( २ ) अयुक्तस्येत्येव क्वचित्पाठः । अयुक्तस्येति किम्, कन्दरा अन्तरम् ।

### शषोः सः ॥ ४३ ॥

सर्वत्र शकारषकारयोस्सकारो भवति शस्य, सद्दो(१)३–३ ब्लोपः ३–५० द्वि० ५–१ ओ) णिसा (२-४२ न्=ण् अंसो(२) (५-१ ओत्वं)। षस्य, संढो (४-१७ वर्गान्त० २-२४ ड्=ढ्-ओत्वं पू० ३-५६ द्वि०न) वसहो (१-२७ ऋ=अ २-२७ भ्=ह्-ओत्वं पू०) क-साअं (२-२-यलोपः ५-३० विं०) शब्दः। निशा। अंशः। षण्ढः। वृषभः। कषायम् ॥ ४३ ॥

### दशादिषु हः ॥ ४४ ॥(३)

दश इत्येवमादिषु शकारस्य हकारो भवति। दह (स्पष्टं) एआरह (२-२ क्लोपः २-१४ द्=॒) बारह (३-१ द्लोपः २-१४ द्=र् ) तेरह (१-५ सू० स्य०) दश, एकादश, द्वादश, त्रयोदश ॥ ४४ ॥

### संज्ञायां वा ॥ ४५ ॥

संज्ञायां सम्यमानायां वा दशशब्दे शस्य हत्वं भवति। दहमुहो, पक्षे दसमुहो (२-४३ श्=स् २-२७ ख्=ह् ५-१ ओ) दहबलो दसबलो, (पूर्ववत्) दहरहो दसरहो (२-२७ थ्=ह् ५-१ ओत्वम्) दशमुखः, दशबलः, दशरथः ॥ ४५ ॥

### दिवसेसस्य ॥ ४६ ॥(४)

दिवसशब्दे सकारस्य हकारो वा भवति। दिअहो

---

(१) सद्दो, इति क्वचित्। (२) अङ्सो इति क्वचित्।

(३) दशपाषाणेहः। ८। १। २६२॥ दहमुहो, दसमुहो–पाहाणो, पासाणो। हे०।

(४) दिवसे सः। ८। १। २६२ दिवहो, दिवसो। हे०।

दिअसो (२-२ वृलोपः ५-१ ओ) दिवसः ॥ ४६ ॥

स्नुषायां ण्हः ॥ ४७ ॥(१)

इति वररुचि कृत प्राकृत सूत्रेषु अयुत वर्ण विधिर्नाम द्वितीयः परिच्छेदः ।

स्नुषाशब्दे षकारस्य ण्हकारो भवति । सोण्हा (१-२० ओत्वम् ३-२ नकारलोपः ॥ ४४ ॥

इति भामहविरचिते प्राकृतप्रकाशे द्वितीयः परिच्छेदः ।

## तृतीयः परिच्छेदः ।

उपरिलोपः कगडतदपषसाम् ॥ १ ॥

कादीनामष्टानां युक्तस्योपरि स्थितानां लोपो भवति । कस्य तावत् भत्तं, (३-५० तद्वि० ५-३० विं ) सित्थओ (३-५० थृद्वि० ३-५१ थ्=त् २-२ कृलोपः ५-१ ओ) गस्य, मुद्धो (३-५० धृद्वि० ३-५१ ध्=द् ५-१ ओ) सिणिद्धो (२-४२ न्=ण् ३-५९ अधिकारसूत्रात् विप्रकर्षः पूर्वस्वरता च ३-५० धृद्वि० ३-५१ ध्=द् ओ० पूर्व०) डस्य, खग्गो ३-५० गृद्वि० ओ-पू० तस्य, उप्पलं (३-५० पृद्वि० ५-३० विं०) उप्पाओ ( ३-५० पृद्वि २-२ तुलोपः ५-१ ओ ) दस्य, मुग्गा (३-५० गृद्वि० ५-११ दी० ५-२ जसोलोपः) मुग्गरो

(१) स्नुषायां ण्हो न वा । ८ । १ । २६१ ॥ सुण्हा सुसा । हे० ।

(५-१ ओ शे० पू०) पस्य, सुत्तो(१) । (३-५० तद्वि ओ० पू०) षस्य, गोट्ठी (३-५० ट्ठि० ३-५१ ठ्=ट्) णिट्ठुरो। (२-४२ न्=ण् (३-५० ठ्ठि० ३-५१ ठ्=ट् ५-१ ओ) सस्य, खलिअं (२-२ तुलोपः ५-३० बिं०) णेहो । (२-४२ न्=ण् ५-१ ओ) भक्तम् सिक्थकम् मुग्धः स्निग्धः खड्गः उत्पलम् उत्पातः मुद्गः मुद्गरः सुप्तः गोष्ठी निष्ठुरः स्खलितम् स्नेहः ॥ १ ॥

अधो मनयाम् ॥ २ ॥

मकारनकारयकाराणां युक्तस्याधः स्थितानां लोपो भवति। मस्य, सोस्सं (२-४३ श्=स् १-२० उ=ओ मलोपे २-४३ षु=स् ३-५० सद्वि० ५-३० विं०) रस्सी (२-४३ शस् मलोपे ३-५० सद्वि० ५-१८ दीर्घः) जुग्गं । (२-३१ यू=ज् मलोपे ३-५० गद्वि० विं० पू०) वग्गी, (४-१ आ=अ शे० पू० ५-१८ दीर्घः) नस्य, णग्गो। (२-४२ न्=ण् नलोपे ३-५० गद्वि० ५-१ ओ) यस्य, सोम्मो (१-४१ औ=ओ यलोपे (३-५० मद्वि० ओत्वंपू०) जोग्गो (२-३१ यु=ज् शे० पूर्ववत्) शुष्म, रश्मिः, युग्मम्, वाग्मी, नग्नः, सौम्यः योग्यः ॥ २ ॥

सर्वत्र लवराम् ॥ ३ ॥

लकारवकाररेफाणां युक्तस्योपर्यधः स्थितानां लोपो भवति। लस्य, उक्का (३-५० कद्वि०) वक्कलं, विक्कवो (प्राय इति वलोपो न ५-१ ओ) वस्य लुद्धओ (३-५० ध्=द्वि० ३-५१ धू=द् २-२ कलोपः ५-१ ओ)(२) पिक्कं । (१-३ सू० स्पष्ट) रस्य,

(१) का० पु० पज्जत्तो, पर्याप्तः अ० पा० ।

(२) लोद्धओ इति क्वचित् तत्र तुण्ड रूपसमत्वादोत्वम् ।

अक्को (३-५० कृद्वि० ५-१ ओ) मक्को (२-४३ श्=स्, शे० पूर्व०) उल्का, वल्कलम्, विक्लवः, पक्कम्, अर्कः, शक्रः ॥३॥

द्रे रो वा ॥ ४ ॥(१)

द्रशब्दे रेफस्य वा लोपो भवति । दोहो ५-१ ओ) द्रोहो । चन्दो ( ३-५६ दृद्वि० न शे० पू० ) चन्द्रो । रुद्दो ( ३-५० दृद्वि० ५-१ ओ) रुद्रो । द्रोहचन्द्ररुद्राः ॥ ४ ॥

सर्वज्ञतुल्येषु ञः ॥ ५ ॥

सर्वज्ञतुल्येषु ञकारस्य लोपो भवति । सव्वज्जो । (३-३ रकार लोपः ३-५० वजयोर्द्वि० ओत्वं पू०) इंगिअज्जो (४-१७ वर्गान्तोवा २-२ तुलोपः ञ्लोपे जद्वि० पू०) जानाते र्यान्येवं रूपाणि तत्र ञ्लोपः(२) ॥ ५ ॥

श्मश्रुश्मशानयोरादेः ॥ ६ ॥

श्मश्रुश्मशानयोरादेर्वर्णस्य लोपो भवति । मस्सु (२-४३ श्=स् ३-३ र्लोपः ३-५० स्द्वि०) मसाणं (२-४३ श्=स् २-४२ न्=ण् ५-३० विं०) ॥ ६ ॥

मध्याह्ने हस्य ॥ ७ ॥

मध्याह्नशब्दे हकारस्य लोपो भवति । मज्झण्णो (३-२८ ध्य्=झ् ३-५० झ्द्वि० ३-५१ झ्=ज् ४-१ आ=अ २-४२ न्=ण् ३-५० द्वि० ५-१ ओ) ॥ ७ ॥

---

( १ ) बाधो रालुक् ८ । ४ । ३९८ अपभ्रंशे संयोगादधोवर्तमानो रेफो लुग् वा भवति । उदाहृतं लोपाभावे-जइ भग्गा पारक्कडा तो सहि मज्झु प्रियेण इति हे० ।

( २ ) क० पु० मणोज्जो 'अ० पा । सर्वज्ञेङ्गितमनोज्ञाः ।

**ह्नह्लह्मेषु नलमां स्थितिरूर्ध्वम् ॥ ८ ॥**

ह्न ह्ल ह्म इत्येतेषु अधः स्थितानां नकारलकारमकाराणां स्थितिरूर्ध्वमुपरिष्टाद्भवति । ह्नस्य, पुव्वण्हो । (४-१ पू=पु ३-३ र्लोपः ३-५० वद्वि० २-४२ न्=ण् ५-१ ओ) अवरण्हो । (२-१५ प्=व् ४-१ रा=र शे० पू०) ह्लस्य, अल्हादो । (४-१ आ=अ ५-१ ओ) ह्मस्य, बम्हणो (३-३ र्लोपः ४-१ आ=अ ५-१ ओत्वम्) ॥ ८ ॥

**युक्तस्य ॥ ९ ॥**

अधिकारोऽयमापरिच्छेदसमाप्तेः, यदित ऊर्ध्वमनुक्रमिष्यामो युक्तस्येत्येवं वेदितव्यम् । वक्ष्यति अस्थनि, अट्ठी (३-११ स्थ्=ठ् ३-५० ठ्द्वि० ३-५१ ठ्=ट् ५-१८ दीर्घः) अस्थि । युक्तग्रहणं हलोऽन्त्यस्य मा भूत् ॥ ९ ॥

**ष्टस्य ठः ॥ १० ॥**

ष्ट इत्येतस्य युक्तस्य ठकारो भवति । लट्ठी (२-३२ य्=ल् शे०पू०) दिट्ठी (१-२८ सू० स्प० शे० पू०) यष्टिः, दृष्टिः ॥ १० ॥

**अस्थनि ॥ ११ ॥**

अस्थिशब्दे युक्तस्य ठकारो भवति । अट्ठी (३-९ सू० स्प० ॥ ११ ॥

**स्तस्य थः ॥ १२ ॥**

स्तशब्दस्य थकारो भवति । उपरिलोपापवादः । हत्थो (३-५० थ्द्वि० ३-५१ थ्=त् ५-१ ओ) समत्थो, ३-३ र्लोपः शे० पू०) थुई (२-२ त्लोपः ५-१८ दीर्घः) थवओ (२-२ प्रायोग्रहणात् वलोपो न, क्लोपस्तु भवति ५-१ ओ) कोत्थुहो ।

(१-४१ सू० स्पष्टं) हस्तः समस्तः स्तुतिः स्तवकः कौस्तुभः ॥१२॥

स्तम्बे ॥ १३ ॥

स्तम्बशब्दे स्तकारस्य थकारो न भवति । तंबो (३-१ स् लोपः ४-१७ वर्गान्त० ५-१ ओ) ॥ १३ ॥

स्तम्भे खः ॥ १४ ॥

स्तम्भशब्दे स्तकारस्य खकारो भवति । खंभो (४-१७ वर्गान्त० ओत्वं पू०) ॥ १४ ॥

स्थाणावहरे ॥ १५ ॥

स्थाणुशब्दे युक्तस्य खकारो भवति, अहरे हरेऽभिधेये न भवति । खाणू । (५-१८ दीर्घः) अहर इति किम् । थाणू (३-१ स्लोपः शे० पू०) हरो(५-१ ओ) स्थाणु हरः ॥१५॥

स्फोटके ॥ १६ ॥

स्फोटकशब्दे युक्तस्य खकारो भवति । खोडओ (२-२० ट्=ड् २-२ क्लोपः ५-१ ओ) ॥ १६ ॥

र्यशय्याभिमन्युषु जः ॥ १७ ॥

र्य इत्यस्य शय्याभिमन्युशब्दयोश्च युक्तस्य जकारो भवति कज्जं (४-१ आ=अ ३-५० जृद्वि० ५-३० विं) मेज्जा (१-५ सू० स्पष्टं) अहिमज्जू(१) (२-२७ भ्=ह् ३-५० जृद्वि० ५-१८ दीर्घः) कार्यम्, शय्या, अभिमन्युः ॥ १४ ॥

---

(१) क० पु० शेषादेशयोर्द्वित्वमनादाविति द्वि० भ । तत्र जकारस्य वर्ग तृतीयत्वेन युक्ताभावा "द्वर्गेषु युजः पूर्वं" इत्यस्य न प्राप्तिः । अ० पा० ।

तूर्यधैर्यसौन्दर्याश्चर्यपर्यन्तेषु रः ॥ १८ ॥

एतेषु शब्देषु र्यस्य रेफो भवति तूरं (३-५४ रस्यद्वि० न ५-३० विं) धीरं (१-३९ सू० स्पष्टं) सुंदेरं अच्छेरं पेरन्तं (१-५ सू० स्प०) ॥ १८ ॥

सूर्ये वा ॥ १९ ॥

सूर्यशब्दे र्यकारस्य रेफादेशो भवति वा । सूरो (५-१ ओत्वं) सुज्जो(१) । पक्षे (४-१ ऊ=उ ३-१७ र्य=ज् ३-५० ज्द्वि० ओ० पू०) ॥ १९ ॥

चौर्यसमेषु रिअं ॥ २० ॥

चौर्यसमेषु शब्देषु र्यस्य रिअमित्यादेशो भवति । चारिअं (१-४१ औ=ओ) सोरिअं वीरिअं (२-४३ श्=स् शे० पूर्व०) चौर्यशौर्यवीर्याणि । समग्रहणादाकृतिगणोयम् ॥ २० ॥

पर्यस्तपर्याणसौकुमार्येषु ल ॥ २१ ॥

एषु शब्देषु र्यस्य लकारो भवति(२) । पल्लत्थं (३-५० ल्द्वि० ३-१२ स्त=थ्-३-५० थ्द्वि० ३-५१ थ्=त् ५-३० विं०) पल्लाणं (पूर्ववत्) सोअमल्लं (१-२२ सू० स्पष्टं) ॥ २१ ॥

र्तस्य टः ॥ २२ ॥

र्त इत्येतस्य टकारो भवति केवट्टओ (१-३४ ऐ=ए प्रायोग्रहणात् त्लोपो न ३-५० ट्द्वि० २-२ क्लोपः ५-१ ओ) णट्टओ, णट्टई (२-४२ न्=ण् शे० पू०) कैवर्तक-नर्तक-

---

( १ ) वाग्रहणात् "र्यशय्यादि" सूत्रेण जकारोपि ।

( २ ) ल्लकारोभवति । क० पु० पा० ।

नर्तकयः(१) ॥ २२ ॥

पत्तने ॥ २३ ॥

पत्तनशब्दे युक्तस्य टकारो भवति । पट्टणं (३-५० द्विं०) २-४२ न्=ण् ५-३० विं०) ॥ २३ ॥

नधूर्तादिषु ॥ २४ ॥

धूर्त इत्येवमादिषु त इत्येतस्य टकारो न भवति । धुत्तो (३-३ र्लोपः ३-५० द्विं० ४-१ ह्रस्वः ५-१ ओ) कित्ति (३-३ र्लोपः ३-५० द्विं० ४-१ ह्रस्वः) ५-२९ ह्रस्वः) वत्तमाणं (३-३ र्लोपः ३-५० द्विं० २-४२ न्=ण् ५-३० विं०) वत्ता (४-१ आ=अ ३-३ र्लोपः शे० पू०) आवत्तो (५-१ ओ शे० पू०) संवत्तओ (३-३ र्लोपः ३-५० द्विं० २-२ क्लोपः शे० पू०) णिवत्तओ (२-४२ न्=ण्० शे० पू०) वत्तिआ (३-३ र्लोपः ३-५० द्विं० २-२ क्लोपः अत्तो, कत्तरी मुत्ती (पूर्ववद्रलोपो ह्रस्वादिकश्च) धूर्तः, कीर्तिः, वर्तमानम् , वार्ता, आवर्तः, संवर्तकः, निवर्तकः, वर्तिका आर्तः, कर्तरी, मूर्तिः ॥२४॥

गर्ते डः ॥ २५ ॥

गर्तशब्दे तस्य डकारो भवति । गड्डो (३-५० द्विं० ५-१ ओ) ॥ २५ ॥

गर्दभसंमर्द(२)वितर्दिविच्छर्दिषु र्दस्य ॥ २६ ॥

एतेषु र्दस्य डो भवति । गड्डहो (३-५० द्विं० २-२७

---

(१) वट्टई पाठे वर्तत इति क्वचिदधिकम् ।

(२) क्वचिद् विमर्दइत्यधिकः पाठस्तत्र विमड्डेति बोध्यम् ।

भ्=ह् ५-१ ओ) संभङ्गो (पूर्व०) विअङ्गो (२-२ त्लोपः ३-३ र्लोपः इद्वि० पू० ५-१८ दीर्घः) विछङ्गो (पूर्ववत्) ॥ २६ ॥

त्यथ्यद्यां चछजाः ॥ २७ ॥

त्यथ्यद्य इत्येतेषां च छ जइत्येते यथासंख्यं भवन्ति। त्यस्य, णिच्चं(१) (२-४२ न्=ण् ३-५० च्द्वि० ५-३० वि०) पच्चक्खं। (३-३ र्लोपः ३-३० क्ष्=छ ५-३० वि०) थ्यस्य रच्छा, मिच्छा पच्छं ( ३-५० छ्द्वि० ३-५१ छ्=च् ) द्यस्य, विज्जा (३-५० ज्द्वि०) वेज्जो। (१-३४ ऐ-ए पू० ज्द्वि० ५-१ ओ)नित्यम् , प्रत्यक्षम् , रथ्या, मिथ्या, पथ्यम् , विद्या, वैद्यः॥२७॥

ध्यह्योर्झः ॥ २८ ॥

ध्य ह्य इत्येतयोर्झकारो भवति। ध्यस्य, मज्झं (३-५० झ्द्वि० ३-५१ झ्=ज् ५-३० वि०) अज्झाओ। (५-१ ओ शे० पू०) ह्यस्य, वज्झओ (४-१ आ=अ २-२ क्लोपः शे० पू०) गुज्झओ (पूर्ववत्)। मध्यः, अध्यायः, वाह्यकः, गुह्यकः ॥२८॥

ष्कस्कक्षां खः ॥ २९ ॥

ष्कस्कक्षां खकारो भवति। ष्कस्य, सुक्खं (३-५० ख्द्वि० ३-५१ ख्=क् ५-३० वि०) पोक्खरो (१-२० सू० स्प०)। स्कस्य, खंदो, खन्धो (४-१७ वर्गान्त० ५-१ ओ) क्षस्य, खदो जक्खो (२-३१ सू० स्प०)(२) ॥ २९ ॥

(१) क्वचित्सच्चं, पच्चक्खं, पच्छाच्चं। सत्यं, प्रत्यक्षं, पाश्चात्यमित्यधिकम्।

(२) शुष्क, पुष्कर, स्कन्द, स्कन्ध, क्षत, यक्षाः। मुक्खमिति पाठे मुष्केति।

अक्ष्यादिषुच्छः ॥ ३० ॥

अक्षि, इत्येवमादिषु क्षकारस्यच्छकारो भवति । अच्छी (३-५० छूद्वि०(१) ३-५१ छू=च् ५-१८ दीर्घः) लच्छी (३-२ मूलोपः शे० पू०) छुण्णो (५-१ ओ) छीरं (स्पष्टं) छुद्धो (३-३ वूलोपः ३-५० धूद्वि० ३-५१ धू=दू ५-१ ओ) उच्छित्तो (३-१ तपयोर्लोपः ३-५० छूद्वि० ३-५१ चत्वं ३-५० तुद्वि० ५-१ ओत्वं) सरिच्छं (१-२ सू० स्प०) उच्छू (१-१५ सू० स्पष्टं) उच्छा (५-४७ आत्मवत् कार्यं शे० पू०) रिच्छो (१-३ ऋ=रि ३-५० छूद्वि० ३-५१ छ=च ५-१ ओ) मच्छिआ (२-२ कूलोपः शे० पू०) छुअं (२-२ तूलोपः ५-३० विं०) छुरं (५-३० विं०) छेत्तं (३-३ रूलोपः ३-५० तुद्वि० ५-३० विं०) वच्छो (३-५० छूद्वि० ३-५१ छू=च् ४-१८ पुं० ४-६ लोपः ५-१ ओ) दच्छो (पूर्ववत्) कुच्छी (५-१८ दीर्घ शे० पू०) । अक्षि, लक्ष्मी, क्षुण्ण, क्षीर, क्षुब्ध, उत्क्षिप्त, सदृक्ष, इक्षु, उक्षन्, क्षार, ऋक्ष, मक्षिका, क्षुत, क्षुर(२), क्षेत्र, वक्षस्(३), दक्ष, कुक्षि, इत्येवमादयः(४) ॥ ३० ॥

क्षमावृक्षक्षणेषु वा ॥ ३१ ॥

एतेषु क्षकारस्य छकारो भवति वा । छमा खमा(५) (३-२९

(१) चकाररहितच्छकार आदेशो बोध्यः । तथैव च छुण्णादिषु दृश्यते । (२) क्षुरे विकल्पः, छुरो, खुरो इति पठन्ति केचित् ।

(३) वृक्ष इति केचित् ।

(४) आर्षे इक्खू, खीर, सारिक्ख मित्याद्यपि दृश्यते । हे० ।

(५) क्षमा पृथिवी, खमा क्षान्तिः । हे० ।

क्ष्=ख) वच्छो रुक्खो (१-३२ सू० स्पष्टं) छणं खणं (पक्षे ३-२९ क्ष्=ख् ५-३० वि०) वृक्ष शब्दे ऋकारस्याकारे कृते क्षणशब्दे चोत्सवाभिधायिनि छत्वमिष्यते(१) ॥ ३१ ॥

ष्मग्मपक्ष्मविस्मयेषुम्हः ॥ ३२ ॥

ष्म इत्येतस्य पक्ष्मविस्मयशब्दयोश्च युक्तस्य म्हकारो भवति ष्मस्य, गिम्हो (३-३ रेफलोपः ह्रस्वः संयोगे=ई=इ ५-१ ओ) उह्मा (५-४७ आत्मवत् कार्य्य शे० पू०) पम्हो (५-१ ओ शे०पू०) विम्हओ। (२-२ य्लोपः शे० पू०) ग्रीष्म, उष्मन्, पक्ष्मन्, विस्मयः ॥ ३२ ॥

ह्नस्नष्णक्ष्णश्नां ण्हः ॥ ३३ ॥

ह्नादीनां ण्ह इत्ययमादेशो भवति। ह्नस्य, वण्ही, जण्हू ५-१८ दीर्घः)। स्नस्य, ण्हाणं (५-३० विं, पण्हुदं (३-३ र्लोपः १२-३(२) त्=द् ५-३० विं) ष्णस्य, विण्हू (५-१८ दी०) कण्हो (३-६१ विप्रकर्षात् ऋ=अ ५-१ओ) क्ष्णस्य, सण्हं (२-४३ श्=स् विप्रकर्षात् बाहुलकेन लस्यात्वे ५-३० विं) तिण्हं (ह्रस्वः संयोगे ती=ति शे० पू०) श्नस्य, पण्हो (३-३ र्लोपः ५-१ ओ) सिण्हो। (२-४३ श्=स् शे० पू०) वह्निः, जह्नुः, स्नानम्, विष्णुः, कृष्णः, श्लक्ष्णं, तीक्ष्णम्, प्रश्नः, शिश्नः ॥३३॥

चिन्हे न्धः ॥ ३४ ॥

चिन्हशब्दे युक्तस्य न्ध इत्ययमादेशो भवति। चिन्धं

---

(१) क० पु० छणो क्षण उत्सव इत्यर्थः। अ० पा०।

(२) व्यत्ययात्प्राकृतेऽपि एवं खदो इत्यत्रापि बोध्यम्।

(१-१२ सू० स्प० ॥ ३४ ॥

ष्पस्य फः ॥ ३५ ॥

ष्प इत्येतस्य फ इत्ययमादेशो भवति । पुप्फं (३-५० फद्वि० ३-५१ फ=प् ५-३० विं) सप्फं (२-४३ श्=स् शे० पू०) णिप्फाओ (२-४२ न्=ण् २-२ प्लोपः फद्वित्वं पत्वं च पू० ५-१ ओ) पुष्पम् , शष्पम् , निष्पापः ॥ ३५ ॥

स्पस्य सर्वत्र स्थितस्य ॥ ३६ ॥

स्प इत्येतस्य सर्वत्र स्थितस्य फ इत्ययमादेशो भवति । फंसो (४-१५ विन्दुः ३-३ र्लोपः २-४३ श्=स् ५-१ ओ) फंदणं । २-४२ न्=ण् ५-३० विं शे० पू०) स्पर्शः, स्पन्दनम् ॥ ३६ ॥

सि च ॥ ३७ ॥

स्पस्य क्वचित् सि इत्ययमादेशो भवति । पाडिसिद्धी (१-२ सू० स्पष्टं) । प्रतिस्पर्द्धी ॥ ३७ ॥

बाष्पे अश्रुणि हः ॥ ३८ ॥

बाष्पशब्दे ष्प इत्येतस्य हकारो भवति अश्रुणि वाच्ये । बाहो । (५-१ ओ ३-५४ हृद्वि० न) अश्रुणि किम् । बप्फो (४-१ बा=ब ३-३५ ष्प्=फ् ३-५० फ्द्वि० ३-५१ फ्=प् ५-१ ओ) उह्मा(१) । (५-४७ आत्मवत्) बाष्पः, ऊष्मा ॥३८॥

कार्षापणे ॥ ३९ ॥

कार्षापणशब्दे युक्तस्य हकारो भवति। काहावणो (१-१५

(१) क्वचिदय पाठो न दृश्यत ।

प्=व् २-४२ न्=ण् ५-१ ओ) ॥ ३९ ॥

श्चत्सप्सां छः ॥ ४० ॥

एतेषां छकारो भवति। श्चस्य, पच्छिमं (३-५० छ्द्वि० ३-५१ छ्=च् ४-१२ विं) अच्छेरं। (१-५-मू० स्पष्टं) त्सस्य, वच्छो (५-१ ओ) वच्छरो। (३-५० छ्द्वि० ३-५१ छ्=च ५-१ ओ) प्सस्य, लिच्छा, जुगुच्छा। (स्पष्टं) पश्चिमम्, आश्चर्यम्, वत्सः, वत्सरः, लिप्सा जुगुप्सा। ॥ ४० ॥

वृश्चिके ञ्छः ॥ ४१ ॥

वृश्चिकशब्दे श्चकारस्य ञ्छ इत्ययमादेशो भवति। विञ्छओ (शे० १-१५ सू० स्प०) ॥ ४१ ॥

नोत्सुकोत्सवयोः ॥ ४२ ॥

उत्सुक, उत्सव, इत्येतयोः छकारो न भवति। श्चत्सप्सां छ इति प्राप्ते प्रतिषिध्यते। उस्सुओ (२-२ कलोपः ५-१ ओ) उस्सवो (३-१ तुलोपः ३-५० सद्वि०) (२-२ प्रायोग्रहणात् लोपो न शे० पू० ॥ ४२ ॥

न्मो मः ॥ ४३ ॥

न्म इत्येतस्य म इत्ययमादेशो भवति। अधोलोपे प्राप्ते। जम्मो (३-५० मृद्वि० ५-१ ओ) वम्महो (२-२९ सू० स्प०) जन्म, मन्मथः ॥ ४३ ॥

म्नज्ञपञ्चाशत्पञ्चदशेषु णः ॥ ४४ ॥

म्न ज्ञ इत्येतयोः पञ्चाशत्पञ्चदशशब्दयोश्च युक्तस्य णकारो भवति। म्नस्य, पज्जुण्णो। (३-३ र्लोपः ३-२७ द्य्-ज्

३–५० जणयोर्द्वि० ५–१ ओ) ज्ञस्य(१), जण्णो (२–३१ य्=ज् शे० पू०) विण्णाणं (३–५० णद्वि० २–४२ न्=ण् ५–३० बिं) पण्णासा (२–४३ श्=स् ४·७ त्=आ शे० पू०) पण्णरहो। ३–५० णद्वि० २–१४ द्=र् २–४४ श्=ह् ५–१ ओ) प्रद्यु-म्नः, यज्ञः, विज्ञानम् , पञ्चाशत् पञ्चदश ॥ ४४ ॥

तालवृन्ते ण्टः ॥ ४५ ॥

तालवृन्तेयुक्तस्य ण्टइत्ययमादेशो भवति। तालवेण्टअं(१–१० सू० स्पष्टं) ॥ ४५ ॥

भिन्दिपालेण्डः ॥ ४६ ॥

भिन्दिपालशब्दे युक्तस्य ण्ड इत्ययमादेशो भवति। भिण्डि-वालो (२–१५ प=व् ५–१ ओ) ॥ ४६ ॥

विह्वले भहौ वा(२) ॥ ४७ ॥

विह्वलशब्दे युक्तस्य भकारहकारौ भवतो वा। बिब्भलो(३) (३–५० भद्वि० ३–५१ भ्=ब् ५–१ ओ) विहलो (३–५४ हृद्वित्वं न) विह्वलः ॥ ४७ ॥

आत्मनि पः ॥ ४८ ॥

आत्मशब्दे युक्तस्य पकारो भवति। अप्पा (३–५० पद्वि० ५–४३ अन=आ) ॥ ४८ ॥

---

(१) म्नज्ञोः।८।२।८३॥ ज्ञः सम्बन्धिनोजस्य लुग् भवति। संजा, सण्णा। क्वचिन्न भवति विण्णाणं। हे०।

(२) वा विह्वले वौ वश्च।८।२।५८ विह्वलेह्वस्य भो वा भवति, तत्सन्नियोगे च विशब्दे वस्य वा भो भवति। भिब्भलो। हे०।

(३) क्वचिद् वेब्भलो तत्र पिण्डसमत्वादेत्वं बोध्यम्।

क्मस्य ॥ ४९ ॥

क्म इत्येतस्य पकारो भवति। रुप्पं (३-५० पूद्वि० ५-३० विं) रुप्पिणी (पूर्व०)। रुक्मं, रुक्मिणी। योगविभागो नित्यार्थः ॥४९॥

शेषादेशयोर्द्वित्वमनादौ ॥ ५० ॥

युक्तस्य यौ शेषादेशभूतौ तयोरनादौ वर्तमानयोर्द्वित्वं भवति। शेषस्य तावत्, भुत्तं (३-१ क्लोपः ३-५० तुद्वि० ५-३० विं०) मग्गो। (३-३ र्लोपः ३-५० गूद्वि० ५-१ ओ) आदेशस्य, लट्ठी (२-३२ सू० स्प०) दिट्ठी (१-१८ सू० स्प०) हत्थो। (३-१२ सू० स्प०) अनादाविति किम्। खलिअं (३-१ सलोपः २-२ तूलोपः ५-३० विं०) खंभो (३-१४ सू० स्प०) थवओ (३-१२ सू० स्प०) भुक्तम्, मार्गः, यष्टिः, हस्तः, स्खलितम्, स्तम्भः, स्तवकः ॥ ५० ॥

वर्गेषु युजः पूर्वः ॥ ५१ ॥

युक्तस्य यौ शेषादेशावनादिभूतौ तयोर्द्वित्वेपि विहिते अध ऊर्ध्वे(१) च यौ वर्गेषु वर्णौ द्वितीयश्चतुर्थो वा(२) विहितस्तस्य पूर्वः प्रथमस्तृतीयो वा भवति। वर्गेषु युग्मस्य द्वितीयस्य प्रथमः, चतुर्थस्य तृतीयो द्वित्वेन विधीयते, अयुग्मयोः प्रथमतृतीयपञ्चमरूपयोः शेषादेशयोस्तु तावेव भवतः। शेषस्य, वक्खाणं (३-२ उभयत्र यूलोपः ४-१ ह्रस्वः ३-५० खद्वित्वे पूर्व० ख्=क् २-४२ न्=ण ५-३० विं०) अग्घो (३-३ र्लोपः ५-१ ओ)

---

( १ ) क० पु० ऊर्ध्वेण०। अ० पा०।

( २ ) क० पु० "अवशिष्टो विहितो वः" अ० पा०।

मुच्छा (४·१ ह्रस्वः) णिज्झरो लुद्धो णिब्भरो (पू० वुलोपादि)। आदेशस्य, दिट्ठी (१-२८ सत्रतोऽनुसन्धेयम्) लट्ठी (२-३२ सूत्रे स्पष्टम्)। वच्छो (३-३० सू स्प० शेषमवदातम्) विप्फरिसो (३-३५ स्प्=फ् ३-६२ विप्रकर्षः पूर्वस्वरतयारिकारश्च २-४३ श्=स् ५-१ ओ.) णित्थारो (२-४२ न्=ण् ३-१२ स्त्=थ् शे० स्प०) जक्खो (१-३१ सूत्रोदाहरणे स्प०) लच्छी (३-३० सूत्रे स्पष्टम्) अट्ठी (३-११ सूत्रे स्प०) पुप्फं (३-३५ सूत्रे स्प०) (सर्वत्र द्वित्वम् ३-५० सूत्रेण बोध्यम्)। व्याख्यानम्, अर्घः, मूर्च्छा, निर्झरः, लुब्धः, निर्भरः, दृष्टिः, यष्टिः, वक्षः, विस्पर्शः, निस्तारः, यक्षः, लक्ष्मीः, अस्थि, पुष्पम्, ॥५१॥

नीडादिषु ॥ ५२ ॥

नीड इत्येवमादिषु अनादौ वर्तमानस्य च द्वित्वं भवति(१)। णेड्डुं (स्पष्टम्) एन्नीडापीडेत्यादिना एत्वम्। सोत्तं(३-३ र्लोपः ४-६ अन्त्यलोपः ५-३० विन्दुः)पेम्मं(३-३ र्लोपः वाहुलकाद् उभयत्र ४-१८प्रवृत्ति र्न शे० पूर्ववत्) वाहित्तं(२) (१-२ यलोपः १-२८ ऋ=इ ५-३० विन्दुः) उज्जुओ(३) (१-२९ ऋ=उ ५-१ ओ० २-२ क्लोपः ५-१ ओ) जणओ (१-४१ औ=ओ २-४२ न्=ण् २-२ क्लोपः ५-१ ओ) जोव्वणं (१-४१ औ=ओ

(१) अनादेशत्वादप्राप्ते विधिरयम्।

(२) इत्कृपादौ। ८। १। १२८ हेम सूत्रे कृपाद्यन्तर्गतव्याहृतस्य पाठात्।

(३) ऋणर्ज्वृषभत्वृषौ वा ८। १। १४१ इति हेमानुसारतः रिज्जू। उज्जू।

२-३१ य्=ज् २-४२ न्=ण् ५-३० विं० ) नीडम् , स्रोतः, प्रेम, व्याहृतम् , ऋजुकः, जनकः, यौवनम् ॥ ५२ ॥

आम्रताम्रयोर्वः ॥ ५३ ॥

आम्र ताम्र इत्येतयोर्द्वित्वेन वकारो भवति। अव्वं, तव्वं(१) (४-१ ह्रस्वः संयोगे ३-५० वृद्वि० ५-३० विं० ) ॥ ५३ ॥

न रहोः ॥ ५४ ॥

रेफहकारयोर्द्वित्वं न भवति। धीरं (१-३९ सूत्रे स्प०) तूरं (३-१८ सू० स्पष्टं) जीहा (१-१७ सू० द्रष्टव्यं) वाहो (३-३८ सू० स्पष्टं)। धैर्यम् , तूर्यम् , जिह्वा, वाष्पः ॥ ५४ ॥

आङो ज्ञस्य ॥ ५५ ॥

आङ उत्तरस्य ज्ञ इत्येतस्यादेशस्य द्वित्वं न भवति। आणा ३-४४ ज्ञ्=ण् ) आणत्ती। (पूर्ववत् ज्ञ्=ण् ३-१ पलोपः ३-५० वृद्वि० ५-१८ दीर्घः ) आज्ञा, आज्ञप्तिः। आङ इतिकिम्। सण्णा। (३-४४ ज्ञ्=ण् ३-५० ण् द्वि० ) संज्ञा ॥ ५५ ॥

न बिन्दुपरे ॥ ५६ ॥

अनुस्वारे परे द्वित्वं न भवति। संकन्तो (३-३ रेफलोपः ४-१७ वर्गान्त० ४-१ ह्रस्वः ५-१ ओ) संझा (३-२८ ध्य्=झ् ४-१७ वर्गान्त )। संक्रान्तः, सन्ध्या ॥ ५६ ॥

समासे वा ॥ ५७ ॥

समासे शेषादेशयोर्वा द्वित्वंभवति। णइग्गामो, णइगामो

(१) हेमस्तु "ताम्राम्रेम्बः" अनयोः संयुक्तस्य मयुक्तो वो भवति। अम्बं, तम्बं, इत्यादि।

(२-४२ न्=ण् २-२ द्लोपः ३-३ रलोपः ४-१ ह्रस्वः, द्वित्वाभावेतु यथावदीकारः५-१ ओ) कुसुमप्पअरो (३-३ र्लोपे २-२ क्लोपः ५-१ ओ) कुसुमपअरो (पद्वित्वाभावः शे०पू०) देवत्थुई, देवथुई (३-१२ स्त्=थ् ३-५१ थ्=त् २-२ त्लोपः ५-१८ दीर्घः) आणालक्खंभो, अणालखंभो (४-२९ परिवृत्तौ आनाले जाते २-४२ न्=ण् ३-१४ स्त्=ख् ३-५१ ख्=क् ४-१७ वर्गान्त० ५-१ ओ)। नदीग्रामः, कुसुमप्रकरः, देवस्तुतिः, आलानस्तम्भः ॥ ५७ ॥

## सेवादिषु च ॥ ५८ ॥

सेवा इत्येवमादिषु चानादौ वा द्वित्वं भवति। सेव्वा, सेवा (२-२ प्रायोग्रहणात् वलोपोन शेषंस्पष्टं) एक्कं, एअं (द्वित्वाभावे २-२ क्लोपः ५-३० विं०) णक्खो (२-४२ न्=ण् द्वित्वपक्षे ३-५१ ख् क् ५-१ ओ) णहो (द्वित्वाभावे २-२७ ख्=ह् ५-१ ओ) देव्वं, दइवं (१-३७ सू० ६१०) असिव्वं, असिवं। नेलोक्कं (१-३५ सूत्रे ६५०) नेलोअं (द्वित्वाभावे २-१ क्लोपः शे० पू०) णिहित्तो (२-४२ न्=ण् द्वित्वे ५-१ ओ) णिहिओ (द्वित्वाभावे २-२ तलोपः शे० पू०) तुण्हिक्को (३-३३ ष्ण्=ह्ण ह्रस्वःसंयोगे, कस्यद्वित्वे ५-१ ओ) तुह्णिओ (द्वित्वाभावे २-२ क्लोपः शे० पू०) कण्णिआरो, कणिआरो (३-३ र्लोपः २-२ क्लोपः द्वित्वभावाभावौ च पूर्ववत् ५-१ ओ) दिग्घं (३-३ र्लोपः ३-५१ घ्=ग् ह्रस्वःसंयोगे इति दी=दि ५-३० विं०) दीहं (द्वित्वाभावे रलोपे च असंयोगपरत्वात्

ह्रस्वाभावः २-२७ घ्=ह् शेषं स्पष्टं) रत्ती (३-३ र्लोपः ४-१ इ० ५-१८ दीर्घः) राई (३-१ त्लोपः ३-३ र्लोपः) दुक्खिओ (खद्वित्वे ३-५१ ख्=क् २-२ त्लोपः ५-१ ओ) दुहिओ (द्वित्वाभावे २-२७ ख्=ह् शे० पू० ) अस्सो असो (१-२ सू० द्रष्टव्यं) इस्सरो ( ३-३ व्लोपः २-४३ श्=स् द्वित्वे ह्रस्वः संयोगे ई=इ ५-१ ओ) ईसरो (द्वित्वाभावे ह्रस्वाभावः शे० पू०) विस्सासो, वीसासो। णिस्सासो, णीसासो (२-४२ न्=ण् शे० पू०) रस्सी (३-२ म्लोपः २-४३ श्=स् स्द्वित्वे ५-१८ दीर्घः) रसी (द्वित्वाभावः शे० पू०) मित्तो ३-३ र्लोपः ५-१ ओ) मिओ (१) (द्वित्वाभावे ३-१ त्लोपः शे० पू० ) पुस्सो (३-२ य्लोपः २-४३ ष्=स् ५-१ ओ) पुसो (द्वित्वाभावे पूर्ववत् शेषं) सेवा, एकः, नखः, दैवम्, अशिवम्, त्रैलोक्यम्, निहितम्, तूष्णीकः, कर्णिकारः, दीर्घम्, रात्रिः, दुःखितः, अश्वः, ईश्वरः, विश्वासः, निश्वासः, रश्मिः, मित्रम् पुष्यः,। उभयत्र विभाषेयम्। सेवादीनामप्राप्ते(२) दीर्घादीनां च प्राप्ते ॥ ५८ ॥

विप्रकर्षः ॥ ५९ ॥

अधिकारोऽयम्। आपरिच्छेदसमाप्तेर्युक्तस्य विप्रकर्षो भवति॥५९॥

( १ ) तइ इन्दोनिच्चिन्दोविहरदु अन्तेउरम्मि सोदाव। इन्दस्स तावमित्तंहवेसि महि-सामिआतुमयं इति कुमारपालचरिते ७ सर्ग ०.३। त्वयाइन्द्रो निश्चिन्तो विहरतु अन्तः पुरे स तावत्। इन्द्रस्य तावन्मित्रं भवसि महीस्वामिन् त्वम्। एतदनुसारेण कुहचाचकमित्र-शब्दो नपुंसकः सूर्य्यवाचकस्तु पुल्लिङ्गो भवितुमर्हति।

( २ ) अनादेशत्वादशेषाच्चेति शेषः।

क्लिष्टश्लिष्टरत्नक्रियाशार्ङ्गेषु तत्स्वरवत्पूर्वस्य ॥६०॥

क्लिष्टादिषु युक्तस्य विप्रकर्षो भवति विप्रकृष्टस्य चयः पूर्वो वर्णो निरर्थस्तस्य तत्स्वरता भवति तेनैव पूर्वेण स्वरेण पूर्वो वर्णः सार्थो भवति इत्यर्थः। किलिट्ठं (ष्टकारविप्रकर्षे लकारेण सह पूर्वस्वरतया चकिलिजाते ३-१० ष्ट=ठः ३-५० ठद्वि० ३-५१ पूर्व ठ्=ट् ५-३० विं) सिलिट्ठं (२-४३ श्=स् शे० पू०) रअणं (विप्रकर्षात् (रत) जाते ३-१ तुलोपः २-४२ न्=ण् ५-३० विं०) किरिआ (२-२ यलोपः शेषं विप्रकर्षादिकं पू०) सारङ्गो ( २-४३ श्=स् ४-१७ विं० ५-१ ओ ) ॥ ६० ॥

कृष्णे वा ॥ ६१ ॥

कृष्णशब्दे युक्तस्य वा विप्रकर्षो भवति पूर्वस्य च तत्स्वरता। व्यवस्थितविभाषेयम्। तेनवर्णेनित्यं विप्रकर्षः, विष्णौतुन भवत्येव। कसणो (१-२७ ऋ=अ ष्णस्य विप्रकर्षे (षण) जाते २-४३ ष्=स् २-४२ न्=ण् ५-१ ओ) कण्हो (३-३३ सू० स्पष्टम् ) ॥ ६१ ॥

इः श्रीह्रीक्रीतक्लान्तक्लेशम्लानस्वप्नस्पर्शहर्षार्हगर्हेषु॥६२॥

एषु युक्तस्य विप्रकर्षो भवति पूर्वस्य इकारः तत्स्वरता च भवति। सिरी (२-४३ श्=स् विप्रकर्षत्वे पूर्वस्य इत्वे तत्स्वरतायां च सिरी इति जातं)(एवं) हिरी। किरीतो(१)। किलन्तो (विप्रकर्षे पूर्वस्येत्वे ४-१७ वर्गान्तो विन्दुर्वा ५-१ ओ) किलेसो (स्पष्टम्) मिलाणं (पूर्ववत् इत्वं तत्स्वरता च २-४२ न्=ण् ५-३० विं०) सिविणो (१-३ सू० स्पष्टम्, फरिसो (३-३५ स्प=फ् इत्वं

( १ ) प्रायोग्रहणान्न तलोपः।

तत्स्वरता च २-४३ श्=स् ५-१ ओ एवमुत्तरत्रापि) हरिसो। अरिहो। गरिहो (स्पष्टाः)। श्रीः, ह्रीः, क्रीतः, क्लान्तः, क्लेशः, म्लानम्, स्वप्नः, स्पर्शः, हर्षः, अर्हः, गर्हः ॥ ६२ ॥

अः क्ष्माश्लाघयोः ॥ ६३ ॥

क्ष्मा श्लाघा इत्येतयोर्युक्तस्य विप्रकर्षो भवति, पूर्वस्य अकारस्तत्स्वरता च भवति। खमा (३-२९ क्ष्=ख् शे० स्पष्टम्। सलाहा (२-४३ श्=स्-विप्रकर्षः पूर्वस्याऽत्वं तत्स्वरता च २-२७ घ्=ह् ) ॥ ६३ ॥

स्नेहे वा ॥ ६४ ॥

स्नेहशब्दे युक्तस्य विप्रकर्षो वा भवति पूर्वस्य च अकारस्तत्स्वरताभवति। सणेहो (पूर्ववत् विप्रकर्षादिकं २-४२ न्=ण् ५-१ ओ ) णेहो ( ३-१ सूत्रे स्पष्टम् ) ॥ ६४ ॥

उः पद्मतन्वीसमेषु ॥ ६५ ॥

पद्मशब्दे तन्वी इत्येवं समेषु च युक्तस्य विप्रकर्षो भवति पूर्वस्य च उकारस्तत्स्वरता च भवति। पउमं(१) (३-२ प्लोपः शेषं स्पष्टम् ) तणुई (२-४२ न्=ण् उत्वादिपूर्ववत् वलोपश्च) ; लहुई (२-२७ घ्=ह् शे० पू०) तन्वी लघ्वी ॥ ६५ ॥

ज्यायामीत् ॥ ६६ ॥

ज्याशब्दे युक्तस्य विप्रकर्षो भवति पूर्वस्य च ईकारस्तत्स्वरता च। जीआ ( २-२ यलोपः ) ॥ ६६ ॥(२)

इति प्राकृतप्रकाशे युक्तवर्णविधिर्नाम तृतीयः परिच्छेदः ॥

---

( १ ) ओत्पद्मे ८। १। ६१। तेन पोम्मं। हे०।

( २ ) क० पु० "इवेव" ॥ ६७ ॥
इव शब्दे व इति निपात्यते। प्पाण व्व धनं। अ० पा०।

# अथ चतुर्थः परिच्छेदः ।

**सन्धावचामज्लोप(१)विशेषा बहुलम् ॥ १ ॥**

अचामिति प्रत्याहारग्रहणम् आजिति च । सन्धौ वर्तमाना-नामचां स्थाने अज्विशेषा लोपविशेषाश्च बहुलं भवन्ति । अज्विशे-षास्तावत्, जउणअडं जउणाअडं (२-३ सूत्रे स्पष्टं जउणा, तट-मिति २-२ त्लोपः(२) २-२० ट=ड् अत्र बहुलग्रहणात् 'णा'-इत्यत्र ह्रस्वत्वं विकल्पेन ५-३० सोर्बिन्दुः) णइसोत्तो णईसोत्तं (२-४२ न्=ण् २-२ द्लोपः ह्रस्वविकल्पः पू० सोत्तो ३-५२ सूत्रे द्रष्टव्यः अत्र विशेषः ४-१८(३) पुं०) बहुमुहं बहूमूहं (२-२७ ख्=ह् ५-३० बिं० शे० पू०) कण्णउरं, कण्णऊरं (३-३ र्लोपः ३-५० णद्वि० २-१ प्लोपः शे० पू०) सिरोवेअणा, सिरवेअणा (२-४३ श्=स् ४-६ स्लोपे अज्विशेष ओ=सिरो इति-वेअणा १-३४ सू० स्प० शे० पू०) पीआपीअं, पिआपिअं, सीआसीअं, सिआसिअं (२-२ त्लोपः शेषं ह्रस्वविकल्पादि पूर्ववत्) सवो-मुओ (३-३ र्लोपः ओत्वमकारस्य २-२७ ख्=ह् ५-१ ओ) सवो-मूओ (३-३ र्लोपः २-१५ प्=व् ओत्वमुत्वे बाहुलकात् शे०पू०) सरोरुहं, सररुहं । (४-६ स्लोपः ओत्वविकल्पः शे० स्पष्टं) लोपविशेषाः, राउलं, राअउलं (जलोपे विकल्पेनाऽऽलोपः २-२

(१) अयं पाठः का० पु० सम्मतः । इतः प्राचीनेषु अज्रूप-विशेषा इति पाठः ॥

(२) वृत्तावयमनादिरेव गृह्यते ।

(३) ३-५२ सूत्रे तु व्यत्ययेन नपुंसकत्वम् ।

कलोपः ५-३० विं) तुहद्धं, तुहअद्धं (६-३१ तव=तुह विकल्पेन बाहुलकादकारलोपे ३-३ रकारलोपः ५-३० विं) महद्धं, महअद्धं (६-५०मम=मह शे० पू०) वावडणं, वाअवडणं (२-१५ पू=व् २-२ दुलोपे बाहुलकाद् विकल्पेन अकारलोपे वापतनमितिजाते पुनः २-१५ प=व्-वावतन इतिजाते ८-५१ त्=ड् २-४२ न्=ण् ५-३० विं०, अलोपाभावे स्पष्ट०) कुम्भारो, कुम्भआरो ( अनादिग्रहणात् २-२ कलोपेन ४-१७ वर्गान्त० २-२ कलोपे ४-१ भकारोत्तरवर्त्यकारलोपे ५-१ ओ, अलोपाभावे स्पष्टं) पवणुद्धअं पवणउद्धअं । (प्राय इतिवलोपो न २-४२ न्=ण् पूर्ववदकारलोपः पवण् उद्धतमिति जाते २-२ तुलोपः ५-३० विं०, अलोपाभावे पूर्ववत् ) यमुनातटं, नदीश्रोतस् , बहुमुखं, कर्णपुरं, शिरोवेदना, पीतापीतं, सीतासीतं, (शीलाशीतं) सर्वमुखः, (सर्पमुखः) सरोरुहं, राजकुलं, तवार्द्धं, ममार्द्धं, पादपतनं, कुम्भकारः, पवनोद्धतम् ॥ संयोगपरे सर्वत्र पूर्वस्याचो लोपः, (ह्रस्वश्च। यथा—णत्थि, सक्कुन्तो, णिवक्कुन्तो, अत्तो इत्यादयः)(१)। (स्पष्टाः) क्वचिन्नित्यं, क्वचिदन्यदेव बहुलग्रहणात् । तेनान्यदपि लाक्षणिककार्यं भवति ॥ १ ॥

उदुम्बरे दोर्लोपः ॥ २ ॥

उदुम्बरशब्दे दु इत्येतस्यलोपो भवति । उम्बरं ( ४-१७ वर्गान्तः ५-३० सोर्विन्दुः ) ॥ २ ॥

---

( १ ) ( ) एतत्कोष्ठकान्तर्गतः पाठो न सार्वत्रिकः ।

कालायसे यस्य वा ॥ ३ ॥

कालायसशब्दे यस्य वा लोपो भवति । कालासं, काला-असं (स्पष्टं) ॥ ३ ॥

भाजने जस्य ॥ ४ ॥

भाजनशब्दे ज(१)कारस्य लोपो वा भवति । भाणं, भाअणं (२-४२ न्=ण् ५-३० विं० पक्षे २-२ सूत्रेण केवलजकारलोपो भवति) ॥ ४ ॥

यावदादिषु वस्य ॥ ५ ॥

यावदित्येवमादिषु व(२)कारस्य वा लोपो भवति । जा, जावता, ताव ( २-३१ य्=ज् ४-६ तलोपः पक्षेस्पष्टं ) पाराओ पारावओ (२-२ तलोपः ५-१ ओ, पक्षेस्पष्टं) अणुत्तन्त, अणुवत्तन्त (२-४२ न=ण् वलोपे ३-३ रलोपः ३-५० वृद्धि० ७-१० मान=न्त वलोपाभावे स्पष्टं) जीअं, जीविअं (२-२ तलोपः ५-३०विं० शे० स्पष्टं०) एव्वं ३-५८ वद्वित्वं ५-३० विं० ) एअं ( द्वित्वाभावे वलोप विकल्पः ) ( एवम् ) एअं (स्पष्टं) कुअलअं कुवलअं(३) । (विकल्पेन स्वररहित वलोप २-२ यलोपः ५-३० विं०) यावत् , तावत् , पारावत, अनुवर्तमान, जीवितं, एवम् , एव, कुवलय इत्येवमादयः ॥ ५ ॥

( १ ) सस्वरस्य लोपो ज्ञेयः हेमस्तु ८।१।२६७ सूत्रे सस्वरस्येति पठत्येव ।

( २ ) सस्वरवलोपः क्वचिद्बाहुलकात्स्वररहितस्याऽपि ।

( ३ ) क०पु० चक्काओ, चक्कवाओ । देउलं, देवउलं । अ०पा० ।

अन्त्यहलः ॥ ६ ॥

वेतिनिवृत्तम् । शब्दानां योन्त्यो हल्तस्य लोपो भवति । जसो (२-३१ य्=ज् २-४३ श्=स् ४-१८ पुंस्त्वं ५-१ ओ) णहं ( २-४२ न्=ण् ४-१९ पुंस्त्वाभावः, ५-३० विं ) सरो (जसोवत्) कम्मो ३-३ रलोपः ३-५० मद्वि० शे० पू० ) जाव । ताव । (४-५ सू० द्रष्टव्यं) यशः, नभः, सरः, कर्म, यावत् , तावत् ॥ ६ ॥

स्त्रियामात् ॥ ७ ॥

स्त्रियां वर्त्तमानस्यान्त्यहल आकारो भवति । सरिआ (स्पष्टं) पडिवआ (१-२ सू० स्पष्टं) वाआ (स्पष्टं) सरित्, प्रतिपद् वाक् ॥७॥

रोरा ॥ ८ ॥

स्त्रियामन्त्यस्य हलो रेफस्य रा इत्ययमादेशो भवति । धुरा, गिरा । (स्पष्टं) ॥ ८ ॥

न विद्युति ॥ ९ ॥

विद्युच्छब्दे आकारो न भवति विज्जू (३-२७ द्य्=ज् ४-६ त्लोपः ३-५० जद्वि० ५-१८ दीर्घः) विद्युत् ॥ ९ ॥

शरदो दः ॥ १० ॥

शरच्छब्दस्यान्त्यहलो दो भवति । सरदो(१) ( २-४३ ४-१८ पु० श्=स् ५-१ ओ) ॥ १० ॥

( १ ) "शरदादेरत्" ८। १। १८ सरओ शरद् । भिसओ । भिषक् । "क्षुधोहा" ८ । १ । १७ छुहा । क्षुत् । हे० ।

दिक्प्रावृषोः सः ॥११॥

दिक्छब्दस्यान्त्यहलः प्रावृट्शब्दस्यापि सकारो भवति । दिसा(१) (स्पष्टम् ।) पाउसो (१-३० सू०स्प०) ॥ ११ ॥

मो बिन्दुः ॥ १२ ॥

अन्त्यस्य हलो मकारस्य बिन्दुर्भवति । अच्छं (४-२० विकल्पेन पुंसि अमि ५-३ अमोऽकारस्य लोपः शे० ३-३० सू०स्प०) वच्छं ( स्पष्टम् ) भद्दं ( ३-३ रलोपः ३-५० द्वि० शे० पू० ) (अग्गि ३-२ नलोपः ३-५० गद्वि० शे० पू०) दट्ठं (३-१० ष्ट्=ठ् ३-५० ठ्द्वि० ३-५१ ठ्=ट् शे. पू. ) वणं, धणं(२) (२-४२ न्=ण् शे० पू०) ॥ १२ ॥

आचि मश्च ॥ १३ ॥

आचि परतो मो(३)भवति वा । फलमवहरइ, फलं अवहरइ(४)(स्प०) ॥ १३ ॥

नञोर्हलि ॥ १४ ॥

नकारञकारयोर्हलि परतो बिन्दुर्भवति मकारश्च । नस्य, अंसो अम्सो (५-१ ओ शे. स्प.) । कंसो, कम्सो । ञस्य, वंचणीअं, वम्चणीअं (२-४२ न्=ण् २-२ यलोपः ५-३० विं० शे० स्प०) विंझो, विम्झो(५) ( ३-२८ ध्य्=झ् नकारस्य बिन्दौ मकारे च

---

( १ ) आपि कृते दिशाशब्दः प्रकृतिः । क्वचिद् दिशा, प्रावृड् इति संस्कृतदर्शनात् ।

( २ ) अक्षः, वत्सः, भद्रं, अग्निः, दृष्टः, वनं, धनम् ।

( ३ ) क० पु० विन्दुः पा० ।

(४) फलमपहरति । (५) अन्सः, कन्सः, वञ्चनीयं विन्ध्यः ।

३-५६ सूत्रेण द्वित्वादिबाधः) ॥ १४ ॥

वक्रादिषु ॥ १५ ॥

वक्रादिषु शब्देषु बिन्दुरागमो भवति । वंकं (३·३ रलोपः ५·३० विं० ) तंसं (३·३ रकारयोर्लोपः ३-२ यलोपः शे. स्प.) हंसो (३-३ रेफलोपः वलोपश्च ५-१ ओ) अंसू (३·३ रलोपः । ३-४३ श्=स् ५-१८ उदीर्घः) मंसू (३-६ शलोपः २·४३ श्=स् ३·३ रलोपः ५-१८ दीर्घः) गुंठी (१·२९ ऋ=उ ३-१० ष्ट्=ठ् ५·१८ दीर्घः) मंथं (१·२२ उ=अ (१)३·१२ स्त्=थ् ५·३० विं०) मणंसिणी (१·२ सू० स्प ) दंसणं ३-३ रलोपः २-४३ श्=स् २-४२ न्-ण् ५-३० विं० ) फंसो (३-३६ सू० स्प.) वंण्णो (३-३ रलोपः ३-५० णद्वि० ५-१ ओ ) पडिंसुदं ( ३-३ रलोपः २-८ त्=ड् २-४३ श्=स् ३-३ रलोपः १२-३ त-दु ५- ३० विं. २-४२ श्=स् ५-१ ओ) असो (स्पष्टम्) अहिमुंक्को(२) (२-२७ भ्=ह् ३-१ त्लोपः ५-१ ओ) । वक्र, त्र्यस्र, ह्रस्व, अश्रु, श्मश्रु, गृष्टि, मुस्त, मनस्विनी, दर्शन, स्पर्श, वर्ण, प्रतिश्रुत, अश्व, अभिमुक्त, इत्यादयः ॥१५॥

मांसादिषु वा ॥ १६ ॥

मांसादिषु शब्देषु वा बिन्दुः प्रयोक्तव्यः । मंसं, मासं । (स्पष्टं)

---

( १ ) मुकुटादे राकृतिगणत्वात् ।

( २ ) शक्त मुक्त, दष्ट, रुग्ण, मृदुत्वे कोवा ८।२।२ मुक्को-मुक्तो डक्को दट्ठो लुक्को लुग्गो माउक्कं माउत्तणं इति हे० अत्र अहिमुंक्को इत्यत्र न बिन्दु परे इत्यनेन द्वित्वनिषेधो ज्ञेयः ।

कहं, कइ । (२-२७ थ्=ह् शे. स्प.) णूणं, णूण । (स्प.) तहिं, तहि (स्प०) असुं असु,(१) (स्प०) तदयमपठितो मांसादिर्गणः । यत्र कचिद्वृत्तभङ्गभयात् त्यज्यमानः क्रियमाणश्च बिन्दुर्भवति स मांसादिषु द्रष्टव्यः ॥ १६ ॥

यथि तद्वर्गान्तः ॥ १७ ॥

यथिपरतो बिन्दुस्तद्वर्गान्तो वा भवति । सङ्का (२-४३ श्=स् शे. स्प.) सङ्खो ( ५-१ ओ. शे. पूर्व. ) अङ्को । अङ्कं । ( स्प ) सञ्चरइ (७-१ ति=इ शे० स्प०) सण्ढो (२-४३ ष्=स्) सन्तरइ (स्प०) सम्पत्ती ( ५-१८ दीर्घः शे. स्प. ) । यथीति किम । अंसो । (४-१४ सूत्रे स्प.) वाधिकारात् पंकं, बिंदू, संका संखो (२) । (सुगमानि) ॥ १७ ॥

नसान्तप्रावृट्शरदः पुंसि ॥ १८ ॥

नकारान्ताः सकारान्ताश्च प्रावृट्शरदौ च पुंसि प्रयोक्तव्याः । नान्ताः, कम्मो (४-६ अन्त्यनकारलोपः ३-३ रलोपः ३-५० मद्वि० ५-१ ओ) जम्मो ( ३-४३ सू० स्प. ) वम्मो । ( ३-३ रलोपः ३-५८ मद्वि० ४-६ नूलोपः ५-१ ओ) सान्ताः, जसो (२-३१ सू० स्प०) तमो ४-६ स्लोपे पुंस्त्वे च ५-१ ओ ) सरो, पाउसो (१-३०सू० स्प०) सरदो(३) ॥ १८ ॥

---

( १ ) क० पु० मांसः, कथम् , नूनम् , तर्हि, असु अ० पा० ।

( २ ) शङ्काः, शङ्खः, कन्सः, अङ्कः, अङ्कं, सञ्चरति, षण्ढः, सन्तरति, सम्पत्तिः, अन्सः, पङ्कं, बिन्दुः ।

( ३ ) कर्म्मन् , जर्मन् , वर्म्मन् , यशस् , तमस् , सरस् , प्रावृष् , शरदः । यच्च सेयं, वयं, सुमणं, सम्मं, चम्ममिति दृश्यते तद्बाहुलकाधिकारात् इति हेमः ।

न शिरोनभसी ॥ १९ ॥

शिरस्, नभस्, इत्यतौ नपुंसि प्रयोक्तव्यौ । सिरं (४-६ सलोपः ६-३० विं) णहं ॥ १९ ॥

पृष्ठाक्षिप्रश्नाः स्त्रियां वा ॥ २० ॥

एते स्त्रियां वा प्रयोक्तव्याः । पुट्ठी (१-२९ ऋ=उ ३-१० ष्ठ=ठः ३-५० द्वि० ३-५१ ठ्=ट् स्त्रीत्वे ई) (एवम्) अच्छी, अच्छं । अच्छो (अक्षस्य तु ३-३० क्ष्=छ् द्वित्वचत्वे ५-१ ओ) पण्हा, पण्हो (३-३ लोपः ३-३३ श्न=ण्ह स्त्रीत्वे आत्वं, पुंस्त्वे ५-१ ओ) । पृष्टम्, अक्षि, प्रश्नः ॥ २० ॥

ओदवापयोः ॥ २१ ॥

अव, अप, इत्येतयोरुपसर्गयोर्वा ओत्वं भवति । ओहासो, अवहासो । ओसारिअं, अवसारिअं (२-२ तूलोप ५-३० विं० । अवहासः, अपसारितम् ॥ २१ ॥

तलूत्वयोर्दात्तणौ* ॥ २२ ॥

तलूत्वइत्येतयोः प्रत्ययोर्यथासंख्यं दा, त्तण इत्येतावादेशौ स्त । पीणदा (२-४२ न्=ण्) मूढदा (१२-३ त्-द्) पीणत्तणं । मूढत्तणं (५-३० विं) ॥ २२ ॥

क्त्वऊणः(१) ॥ २३ ॥

क्त्वाप्रत्ययस्य ऊणइत्ययमादेशो भवति । घेऊण (८-१६ ग्रह्=

---

* त्वतलोः प्पणः ८ । ४ । ४३७ अपभ्रंशे । इति हे० ।

(१) का० पु० पा० 'उण्' इति पा० ।

घेत्) सोऊण (३-३ रलोपः २-४३ श्=स् उ=ओ गुणेन(१) काऊण (८-१७ कृञ्=का) दाऊण। (स्पष्टं) गृहीत्वा, श्रुत्वा, कृत्वा, दत्त्वा ॥ २३ ॥

तृण(२) इरः शीले ॥ २४ ॥

शीलेयस्तृन् प्रत्ययो विहितस्तस्य इर इत्ययमादेशो भवति। भ्रमणशीलो भ्रमिरो(३)। हसनशीलो हसिरो (५-१ ओ स्पष्ट-प्राये) ॥ २४ ॥

आल्विल्लोल्लावन्तेन्तामतुपः ॥ २५ ॥

आलु,इल्ल,उल्ल,आल,वन्त,इन्त,इत्येत आदेशा मतुपः स्थाने भवन्ति। आलुस्तावत्, ईसालू (३-३ रलोपः २-४३ ष्=स् आलुकृते ५-१८ दीर्घः) विद्दालू। ( २-४२ न्=ण् ३-३ र-लोपः ३-५० दुद्धि० शे० पू०) इल्लः, विआरिल्लो(४) (२-२ कलोपः इल्ले कृते ५-१ ओ)मालाइल्लो। (५-१ ओ शे० स्प०) उल्लः, विआरुल्लो (२-२ कलोपः शे० स्प०। आलः(५), घणालो (२-४२ न्=ण् ५-१ ओ) सद्दालो (३-३ ब्लोपः ३-५० द्वि० ५-१ ओ)। मन्तः, धणवन्तो (स्प०) जोव्वणवन्तो (२-३१ य्=ज् प्राय इति वलोपो न २-४२ न्=ण् ५-१ ओ)। इन्तः(६), रोसाइन्तो(७) (२-४३ ष=स् ५-१ ओ) पाणाइन्तो

---

( १ ) युवर्णस्य गुणः ८।४।२३७। धातोरिवर्णोवर्णस्य क्ङित्यपि गुणः। जेऊण, नेऊण, नेइ, नेन्ति, उड्डेइ, उड्डेन्ति, मोत्तूण सोऊण। क्वचिन्न नीओ—उड्डीणो इ० हेमच०। ( २ ) का० पा० तृन्।

( ३ ) क्वचिद् भमिरो पा०। ( ४ ) का० पा० विआर इलुः।

(५) का० पा० अलुः। (६) का० पा० इतः। (७) का०पा० रोसः।

(३-३ रलोपः शे०पूर्व०)(१)। यथादर्शनमेते प्रयोक्तव्याः, न सर्वे सर्वत्र। इर्षावत्, निद्रावत्, विकारवत्, मालावत्, धनवत्, शब्दवत्, यौवनवत्, रोषवत्, प्राणवत्।

["क्वचि दा मतुपोऽन्त्यस्य मन्तो वा दृश्यते क्वचित्।

हणुमा, हणुमंतो (२-४३ न्=ण् मतुपोऽन्त्यस्यात्वं) (पक्षे-मन्तादेशः ५-१ ओ)॥

इल्लोल्लावपरे प्रायः शैषिकेषु प्रयुञ्जते"॥

पौरस्त्यं, पुरोभवं-पुरिल्लं (पुरस् अत्र ४-६ सलोपे च शैषिक इल्ल प्रत्यये ४-१ अलोपे ५-३० विं)। आत्मीयं-अप्पुल्लं॥ ३-४८ त्म्=प् ३-५० पद्वि० ४-६ न्लोपः ४-१ अलोपः उल्लप्रत्ययः ५-३० विं०)॥

"परिमाणे किमादिभ्यो भवन्ति केद्दहादयः।

केद्दहं, केत्तिअं। जेद्दहं, जेत्तिअं। तेद्दहं, तेत्तिअं। एद्दहं, एत्तिअं। (किमः केद्दह, केत्तिअ। यदो जेद्दह, जेत्तिअ। तदो तेद्दह, तेत्तिअ। एतद एद्दअ, एत्तिअ। इत्यादेशाः भवन्तीत्यर्थः ५-३० विन्दुः सर्वत्र)

कृत्वसो हुत्तमित्यन्ये देशीशब्दः स इष्यते"॥

सअहुत्तं (२-४३ श्=स् २-२ तलोपे कृत्वसोहुत्तादेशे ५-३० विं०) सहस्सहुत्तं (३-३ रलोपः ३-५० स्द्वि० शे० पूर्ववत्)। जातौ वा स्वार्थिकः कः *(२)॥

---

(१) परन्तु सर्वत्र लोपादिकमज्विशेष कार्यं ४-१ सूत्रेण बोध्यम्।

(२) केचिद् सूत्ररूपेण पठन्ति।

जातौ स्वार्थे ककारः प्रयोक्तव्यः] । (१) (पदुम, पदुमअं, पक्षे पदुमम्(२)(३) ॥ २५ ॥

विद्युत्पीताभ्यां वा(४) लः ॥ २६ ॥

विद्युत्पीतशब्दाभ्यां परतः स्वार्थे लप्रत्ययो भवति। विज्जू (३-२७ द्य्=ज् ३-५० जद्वि० ५-१८ दीर्घः) विज्जुली (इवन्तः स्त्रिया शे० पू०) पीअं (२-२ तुलोपः ५-३० विं०) पीअलं(५) (स्पष्टं) ॥ २६ ॥

वृन्दे वो रः ॥ २७ ॥

वृन्दशब्दे वकारात्परः स्वार्थे रेफो वा प्रयोक्तव्यः । व्रन्दं (१-२७ ऋ=अ, वकारात्परे रेफे कृते ४-१७ वर्गान्तः ५-३० विं०) वंदं(६) (१-२७ ऋ=अ शे० स्प०) ॥ २७ ॥

करेण्वां रणोः स्थितिपरिवृत्तिः ॥ २८ ॥

करेणुशब्दे रेफणकारयोः स्थितिपरिवृत्तिर्भवति । कणेरू । पुंसि न भवति (७) । करेणू ( ५-१८ दीर्घः ) ॥ २८ ॥

---

( १ ) क० पु० न दृश्यते [ ] कोष्ठकान्तर्गतः पाठः ।

( २ ) ( ) कोष्ठान्तर्गतः पाठः प्रायस्त्रुटित एव ।

( ३ ) अतोर्डेत्तुलः ८ । ४४३५। अपभ्रंशे इदं किं यत्तदेतद्भ्यः परस्य अतोः प्रत्ययस्य डेत्तुल इत्यादेशो भवति । एत्तुलो-केत्तुलो जेत्तुलो तेत्तुलो एत्तुलो ॥ इति हेमः ।

( ४ ) वेतिसार्वत्रिको न ।

( ५ ) क० पु० विद्युत , पीतवर्ण इत्यर्थः अ० पा० ।

( ६ ) वुन्दं विन्दं क्वचित्पाठः ।

( ७ ) क्वचिदु करेण्वामिति स्त्रीलिङ्गनिर्देशात् । अ० पा० ।

आलाने लनोः ॥ २९ ॥

आलानशब्दे लकारनकारयोर्हल्मात्रयोः स्थितिपरिवृत्तिर्भवति। आणालखम्भो (३-५७ सू० स्प०) ॥ २९ ॥

बृहस्पतौ बहोर्भऔ ॥ ३० ॥

बृहस्पतिशब्दे वकारहकारयोर्यथासङ्ख्यं भकाराकारौ भवतः। भअप्फई(१) (१-१७ ऋ=अ वह-इत्यस्य भअकृते ३-३५ स्प=फ् ३-५१ द्वि० २-२ तूलोपः ५-१८ दीर्घः) ॥ ३० ॥

मलिने लिनोरिलो वा ॥ ३१ ॥

मलिनशब्दे लिकारनकारयोर्यथासंख्यमिकारलकारौ वा भवतः। मइलं, मलिणं (पक्षे २-४२ न्=ण् ५-३० विं०) ॥३१॥

गृहे घरोऽपतौ ॥ ३२ ॥

गृहशब्दे घरइत्ययमादेशो भवति। पतिशब्दे परतो न भवति। घरं (५-३० विं) भवनम्। अपताविति किम्। गहवई(२) (१-१८ ऋ=अ २-१५ प्-व् २-२ तूलोपः ५-१८ दीर्घः) ॥३२॥

दाढादयो बहुलम् ॥ ३३ ॥

दाढाइत्येवमादयः शब्दा बहुलन्निपात्यन्ते दंष्ट्रादिषु। दंष्ट्रा, दाढा। इदानीं, एण्हिं। दुहिता, धीआ, धूदा(३)। चातुर्यं, चातुलिअं। मण्डूकः, मण्डूरो। गृहेनिहितं, घरेणिहितं। उत्पलं, कन्दोट्ठो। गोदावरी, गोला। ललाटं, णिडालं। भ्रूः,

(१) का० पा० भअप्पई। सुत्रे हयौ इतिपाठ हयप्पई इत्युदाहार्यम्। (२) गृहपतिः।

(३) का० पा० दिघी, धिया, दिट्ठी, धूआ।

भुमआ(१) । वैदूर्यं, वेलुरिअं । उभयपार्श्वं, अवहोवासं । चूतः माइंदो, माअंदो । (दंष्ट्रादिषु दाढादयो निपातसिद्धाः शब्दाः संस्कृतशब्दानुसारेण देशसङ्केतप्रवृत्तभाषाशब्दानुसारेणच यथायथं लिङ्गेषु प्रयोज्याः स्पष्टाश्चैतेऽतोऽलंविस्तरेण)। आदिशब्दोयं प्रकारे तेन सर्व एव देशसङ्केतप्रवृत्तभाषाशब्दाः परिगृहीताः ॥ ३३ ॥

इति प्राकृतप्रकाशे संकीर्णविधिर्नाम चतुर्थः परिच्छेदः ।

---

## अथ पञ्चमः परिच्छेदः ।

---

### अत ओत् सोः ॥ १ ॥

अकारान्ताच्छब्दात्परस्य सोः स्थाने ओत्वं भवति । वच्छो (१-३२ । ३-३० । ३-३१ सूत्रेषु स्पष्टम्) वसहो (१-२७ । २-४३ सू० स्प०) पुरिसो (१-२३ सू० स्प०) वृक्षः, वृषभः, पुरुषः ॥ १ ॥

### जश्शसोर्लोपः ॥ २ ॥

अत इत्यनुवर्तते । आकारान्तस्यानन्तरं यौ जश्शसौ तयोर्लोपो भवति । वच्छा सोहंति । जश्शसूङस्यांसु दीर्घ इतिदीर्घे कृते पश्चाल्लोपो जसः (१-२७ ऋ=अ ३-३१ छत्वविकल्पः(२) ३-५० द्वि० ३-५१ छ्=च् ५-११ जसि दीर्घे कृते लोपः,

( १ ) का० पा० भूमआ ।

( २ ) वत्सशब्दप्रयोगे तु ३-४० त्स-छ ।

सोहंति इति २-४१ शू=सू २-१७ भू=हू ७-४ न्ति,) । वृक्षाः शोभन्ते । वच्छेणिअच्छइ । ए च सुपीत्येत्वे कृते शसो लोपः । (पूर्ववत् वृक्ष=वच्छ ५-१२ एत्वे कृते शसो लोपः, णिअ इति २-४२ न्=ण् २-२ यलोपः ७-१८ त्=इ) वृक्षान्नियच्छत ॥२॥

अतो मः ॥ ३ ॥

अकारान्तस्यानन्तरं योऽम् द्वितीयैकवचनम् तदकारस्य लोपो भवति । वच्छं पेक्खइ (४-१२ मो बिं०) (वृक्षं पश्यति) ॥ ३ ॥

टामोर्णः ॥ ४ ॥

अतोनन्तरं टामोस्तृतीयैकवचनषष्ठीबहुवचनयोर्णकारो भवति । वच्छेण । ए च सुपीत्येत्वम् । (५-१२ एत्वे कृते टा=ण) वच्छाण जश्शस्ङस्यांसु दीर्घ इति दीर्घः (वृक्षेण, वृक्षाणाम्)॥४॥

भिसोर्हिं ॥ ५ ॥

अतोनन्तरस्य भिसो हिं भवति । वच्छेहिं । ए च सुपीत्येत्वम् (५-१२ एत्वं शे० स्प०=वृक्षैः) ॥ ५ ॥

ङसेरादोदुहयः ॥ ६ ॥

अतोनन्तरस्य ङसेः पञ्चम्येकवचनस्य स्थाने आ, दो दु, हि, इत्येत आदेशा भवन्ति । वच्छा, वच्छादो, वच्छादु, वच्छाहि । श्शस्ङस्यांसु(१)दीर्घत्वम् । (स्पष्टाः=वृक्षात् ॥ ६ ॥

सो हिंतो सुन्तो ॥ ७ ॥

अतोनन्तरस्य भ्यसो, हिंतो, सुन्तो, इत्येतावादेशौ भवतः ।

(१) का० पा० जस्भ्यस्ङस्यां सु ।

वच्छाहिंतो, वच्छासुन्तो । ए च सुपीति चकारेण दीर्घत्वम् (स्प-ष्ट-वृक्षेभ्यः) ॥ ७ ॥

**स्सो ङसः ॥ ८ ॥**

अतोनन्तरस्य ङसः स्स इत्यादेशो भवति । वच्छस्स (स्प० वृक्षस्य) ॥ ८ ॥

**ङेरेम्मी ॥ ९ ॥**

अतोनन्तरस्य ङेः ए, म्मि इत्यादेशौ भवतः । वच्छे । वच्छ-म्मि । क्वचिन्ङसिङयोर्लोपः । इत्यकारलोपः । (स्प०=वृक्षे) ॥९॥

**सुपः सुः ॥ १० ॥**

अतोनन्तरस्य सुपः सु इत्यादेशो भवति । वच्छेसु (वृक्षेषु) (एवं वत्सशब्दरूपाण्यपि बोध्यानि) । ए च सुपीत्येत्वम् ॥ १० ॥

**जश्शस्ङस्यांसु दीर्घः ॥ ११ ॥**

जसादिषु परतोऽतो दीर्घो भवति । वच्छा सोहन्ति । जश्श-सोर्लोप इति जसो लोपः, (५-२ सू० स्पष्टं, वत्सा शोभन्ते) । वच्छादो, वच्छादु, वच्छाहि, आगदो (वत्सात् ,) ङसेरादोदु-ह्यः वच्छाण । (वत्सेन) टामोर्णः ॥ ११ ॥

**ए च सुप्यङिङसोः ॥ १२ ॥**

अतोकारस्यैत्वं भवति सुपि परतो ङिङसौ वर्जयित्वा । च-काराद्दीर्घश्च । वच्छे (वत्सान्) पेक्खह । जश्शसोर्लोपः । (१२-१८ दृश्=पेक्ख ८-१९ थ=ह=पश्यत) वच्छेण । टामोर्णः । (=वत्सेन) वच्छेहिं (=वत्सैः) । वच्छेसु (वत्सेषु) । चकाराद्दीर्घ-श्चेति । वच्छाहिंतो, वच्छासुतो (वत्सेभ्यः) । भ्यसो हिंतो, सुंतो-अङिङसोरिति किम् । वच्छम्मि(वत्से) । वच्छस्स(वत्सस्य) ।१२॥

क्वचिद् ङसिङ्योर्लोपः ॥ १३ ॥

अतो ङसि, ङि इत्येतयोः परतः क्वचिल्लोपो भवति । वच्छा आगदो । ङसेरादोदुहय इति आ । (आगदो इति आङ्पूर्वकगमेः क्तान्तस्य १२-३ त=द् ५-१ ओ) वच्छेठिअं (वत्सेस्थितम् ङेरेम्मी इत्येत्त्वम् (ठिअं० स्था=ठ शेषं संस्कृतवद्)॥१३॥

इदुतोः शसो णो ॥ १४ ॥

इदुदन्तयोः शसो णो भवति । अग्गिणो पेक्खइ (४-१२ सूत्रे अग्गि इत्यत्र निष्पादिताद् शसो=णो=अग्नीन्) वाउणो पेक्ख (२-२ यलोपः शे० पू०=वायून् , 'पेक्ख' इति शौरसेन्यां दृशेः पेक्खादेशो भवति तस्याश्च "प्रकृतिः संस्कृतम्" इति संस्कृतवद् हेर्लुक् भवति) ॥ १४ ॥

ङसो वा ॥ १५ ॥

इदुदन्तयोर्ङसो वा णो भवति । अग्गिणो, अग्गिस्स (स्पष्टे=) वाउणो, वाउस्स (२-२ यलोपे कृते ङसो णो, पक्षे ५-८=स्स) अग्नेः वायोः ॥ १५ ॥

जसश्च ओ यूत्वम्(१) ॥ १६ ॥

इदुदन्तयोर्जस ओकारादेशो भवति । इदुतोश्च ईत्वं, ऊत्वं वा चकाराद् णो च । अग्गीओ, वाऊओ । अग्गिणो, वाउणो (स्पष्टानि=अग्नयः, वायवः) ॥ १६ ॥

---

(१) जस आ वो वाऽत्व यूत्व च । इदुदन्तयोः शब्दयोर्जस ओ वो इत्यादेशौ भवतः । अत्वं, ईत्वं, ऊत्वं, च विकल्पेन । चकारात् णोऽपि । पक्षे अदन्तवत् । अग्गीओ, अग्गीवो, अग्गवो, अग्गी । वाऊओ । जसश्च ओ यूत्वं । का० पा० ।

टा णा ॥ १७ ॥

इदुदन्तयोष्टाविभक्तेः णा इत्ययमादेशो भवति । अग्गिणा, वाउणा (स्पष्ट=अग्निना–वायुना) ॥ १७ ॥

सुभिस्सुप्सु दीर्घः ॥ १८ ॥

इदुदन्तयोः सु, भिस्, सुप् इत्येतेषु दीर्घो भवति । सु, अग्गी (३–२ नलोपः ३–५० गद्वि० ४–६ सोर्लोपः शे०स्प० अग्निः) वाऊ (२–२ यलोपः शे० स्प० वायुः) भिस्, अग्गीहिं (४–६ सोर्लोपः ५–५ भिस्=हिं=अग्निभिः) वाऊहिं । (२–२ यलोपः शे० पू०=वायुभिः) सुप्, अग्गीसु (३–२ नलोपः ३–५० गद्वि० दीर्घः २–४३ ष्=स्=अग्निषु) वाऊसु (२–२ यलोपः दीर्घः २–४३ षू=सू=वायुषु) ॥ १८ ॥

स्त्रियां शस उदोतौ(१) ॥ १९ ॥

स्त्रियां वर्तमानस्य शस उत् ओत् इत्येतावादेशौ भवतः । मालाउ, मालाओ । (स्पष्ट=मालाः) णईउ, णईओ (२–२ न्=ण् २–२ दलोपः शे० स्प०=नदीः) । वहूउ, बहूओ (२–२७ ध्=ह् शे० स्प० वधूः) ॥ १९ ॥

जसो वा(२) ॥ २० ॥

जसः स्त्रियाम् उत् ओत् इत्येतावादेशौ वा भवतः । पक्षे अदन्तवत् । मालाउ, मालाओ । माला (स्प०, अदन्त ५–२ जसो लोपः=मालाः ॥ २० ॥

---

(१) स्त्रियां जश्शसोरुदोतौ । का० पा० ।

(२) ङसो वा । का० पा० ।

अमि ह्रस्वः ॥ २१ ॥

अमि परतः स्त्रियां ह्रस्वो भवति । मालं (ह्रस्वेजाते ५–३ अकारलोपः ४–१२ मकारबिन्दुः =मालाम् ) णइं (२–४२ न्=ण् २–२ दलोपः ४–१ अमोऽकारलोपः ४–१२ बिं=नदीम् ) बहुं (२–२७ ध्=ह् शे० पूर्व०) वधूम् ॥ २१ ॥

टाङस्ङीनामिदेददातः(१) ॥ २२ ॥

टा, ङस् , ङि, इत्येतेषां स्त्रियाम् इत् , एत् , अत् , आत् इत्येत आदेशा भवन्ति । टा, णईइ, णईए, णईअ, णईआ कअं । (५–२१सू० नकारस्य ण् , दलोपश्च दर्शितः शे० स्प०=नद्या) (कअं इति १–२७ सू० स्प०=कृतम् ) ङस्, णईइ, णईए, णईअ, णईआ, वणं । (णईपूर्ववत् अन्यत्स्पष्टं=नन्द्याः) (वणं इति ४–१२ सू० स्प०) ङि, णईइ, णईए, णईअ, णईआ ठिअं (पूर्ववत् णईशब्दः शे० सुगमं=नद्यां) (ठिअं इति ५–१३ सू० स्पष्टं=स्थितम् ) ॥ २२ ॥

नातोऽदातौ ॥ २३ ॥

आत-आकारान्तस्य स्त्रीलिङ्गस्यानन्तरं टाङस्ङीनाम् अत्, आत्, इत्येतावादेशौ न भवतः । पूर्वेण प्राप्तौ निषिध्यते । मालाइ, मालाए कअं, धण, ठिअं । (५–२२ सूत्रादिदेतावेव भवतः, अ० स्प०=मालया) ॥ २३ ॥

(१) टाङसिङस्ङीनामिदेददातः । का० पा० ।

## आदीतौ(१) बहुलम् ॥ २४ ॥

स्त्रियामाकारान्तादातः स्थाने आत् ईत् इत्येतौ बहुलं प्रयो-क्तव्यौ । सहमाणा, सहमाणी । (२-४२ न्=ण् शे० स्प०) हळद्दा, हळद्दी ।(१-१३ सूत्रे द्रष्टव्ये) सुप्पणहा, सुप्पणही । (३-३ रलोपः ३-५० पद्वि० ४-१ ह्रस्वः २-४२ न्=ण् २-२७ ख्=ह् शे०स्प०)छाहा, छाही । (२-१८ सू०द्रष्टव्यं शे०स्प०)(१) ॥२४॥

## न नपुंसके ॥ २५ ॥

प्रथमैकवचने नपुंसके दीर्घत्वं न भवति । सोर्दीर्घः पूर्वस्ये-त्यनेन इदुदुन्तयोः प्राप्तं पूर्वस्य दीर्घत्वं न नपुंसके इत्यनेन बाध्यते दिहं ( ५-३० सोर्बिन्दुः शे० स्प० ) महुं ( २-२७ ध्=ह् शे० स्प०) हविं । (४-६ ष्लोपः २-२ प्रायो ग्रहणात् वलोपो न शे० पू०) दधि, मधु, हविः ॥ २५ ॥

## इज्जश्शसोर्दीर्घश्च ॥ २६ ॥

नपुंसके वर्तमानयोर्जश्शसोः स्थान इदादेशो भवति पूर्वस्य च दीर्घः । वणाइ ( २-४२ न्=ण् जश्शसोरिदादेशः पूर्वस्य दीर्घः=वनानि) दहीइ । महूइ । (पू०) ॥ २६ ॥

---

( १ ) आदितौ-अदितौ । का० पा० ।

( २ ) यत्तत्किमः । बहुलमित्यनुवर्तते यत्तत्किमित्येतेषु परतः आतः स्थान ईत्ययमादेशोभवति । स्त्रियामित्यनुवर्तते । प्रथमैकवच-नवर्जं ए आदेशश्च बहुलवचनात् । जीए, तीए, कीए, जीहिं, तीहिं, कीहिं । पक्षे । जाए, ताए, जाहिं, काहिं । यस्याः तस्याः, कस्याः, याभिः ताभिः, काभिः । इति क्वचिदधिकः पाठः । का० पा० ।

## नामन्त्रणे सावोत्वदीर्घबिन्दवः ॥ २७ ॥

आमन्त्रणे गम्यमाने सौपरत ओत्वदीर्घबिन्दवो न भवन्ति। "अतओत्सो"रित्योत्वं प्राप्तम्। 'सुभिस्सुप्सु दीर्घ" इति दीर्घः। "सोर्बिन्दुर्नपुंसक"इतिबिन्दुः प्राप्तः। हे वच्छ, हे अग्गि हे वाउ, हे वण, हे दहि, हे महु(व्याख्यातप्रायाः पूर्वमेव, विशेषकृत्यं सुस्पष्टम्) ॥ २७ ॥

## स्त्रियामातएत् ॥ २८ ॥

स्त्रियामामन्त्रणे आतः स्थाने एत्वं भवति सौ परतः । हे माले हे साले। (स्पष्टं) "अन्त्यस्य हल"इति सोर्लोपः ॥ २८ ॥

## ईदूतोर्ह्रस्वः ॥ २९ ॥

आमन्त्रणे ईदूतोर्ह्रस्वो भवति। हे णइ, हे बहु ॥ २९ ॥

## सोर्बिन्दुर्नपुंसके ॥ ३० ॥

नपुंसके वर्तमानस्य सोर्बिन्दुर्भवति। वणं, दहिं, महुं। (स्प०) ॥ ३० ॥

## ऋत आरः सुपि(१) ॥ ३१ ॥

ऋकारान्तस्य सुपि परत आर इत्यादेशो भवति। भत्तारो सोहइ (३-५० तद्धि० ५-१ ओ=भर्ता) (२-४३ श्=स् युवर्णस्य गुणः २-२७ भ्=ह् ७-१ त=इ=शोभते) भत्तारं पेक्खमु (५-३ अमोऽकारलोपः ४-१२ मवि० शे० पू० भर्तारं) (१२-१८ दृश=पेक्ख ७-४ मु=पश्यामः) भत्तारेण कअं (५-१२ एत्वं ५-४ टा=ण) ॥ ३१ ॥

---

( १ ) सो। का० पा०

मातुरात् ॥ ३२ ॥

मातृसम्बन्धिन ऋकारस्याकारो भवति । माआ (२-२ तलोपः) सोहइ (२-४३ श्=स् सोहन्तिवत् गुणः ७-१ इ= शोभते) माअं पेक्खम्हु (३-३ तलोपः ह्रस्वः ५-३ अमोऽकार· लोपः ४-१२ विं० । अस्प०) माआइ माआए (२-२ तलोपः आत्वे कृते ५-२२ कअं ॥ ३२ ॥

उर्ज्जश्शम्टाङस्सुप्सु वा(१) ॥ ३३ ॥

जश्शस्टाङस्सुप्सु परत ऋकारस्य स्थाने उकारादेशो भवति वा । जस्, भत्तुणो (३-३ रलोपः ३-५० तद्वि० ५-१६ णो) भत्तारा । ( ५-३१ ऋ=आर ५-११ दीर्घः ५-२ जसो लोपः शे० पू०) शस्, भत्तुणो (५-१४ शसो=णो शे० पू०) भत्तारे । (५-३१ आर ५-१२ एत्वं ५-२ शसो लोपः शे० पू०) टा, भत्तुणा (५-१७ टा=णा शे० पू०) भत्तारेण । (पू० व० रलोपादिकं ५-३१ आर ५-१२ एत्वं ५-४ टा-ण) ङस्, भत्तुणो (५-१५ णो शे० पू०) भत्तारस्स (रलोपे तद्वित्वे च कृते ५-३१ आर ५-८ ङसः स्सः) सुप्, भत्तूसु (५-२१ दीर्घः शे० स्प०) भत्तारेसु । (५-२२ एत्वं शे० पू०) ॥३३॥

पितृभ्रातृजामातॄणामरः ॥ ३४ ॥

पित्रादीनां सुपि परत ऋतोऽरो भवति । आरापवादः । पिअरं (२-२ तलोपः ५-३ अमोऽकारस्य लोपः ४-१२ मो बिन्दुः

---

( १ ) उण जश्शस्टाङसिङस्सु वा । का० पा० ।

पिअरेण (५·१२ एत्वं ५-४ ट=ण शे० पू०) भाअरं, भाअरेण। जामाअर, जामाअरेण (पूर्ववत्) ॥ ३४ ॥

### आ च सौ(१) ॥ ३५ ॥

पित्रादीनामाकारो भवति सौ परतः। चकारादरश्च। पिआ ( स्पष्टं ) पिअरो ( ५-१ ओ शे० स्प० ) भाआ, भाअरो। जामाआ, जामाअरो ॥ ३५ ॥

### राज्ञश्च ॥ ३६ ॥

राजन् शब्दस्य आ इत्यमादेशो भवति सौ परतः। राआ ( स्पष्टं ) ॥ ३६ ॥

### आमन्त्रणे वा बिन्दुः ॥ ३७ ॥

राजन् शब्दस्य आमन्त्रणे वा बिन्दुः स्यात्। हेराअं ( ४-६ नलोपः २-३ जलोपः शेषमदन्तवत् ) हराअ ( ५-२७ बिन्दुर्न ॥ ३७ ॥

### जश्शस्ङस्ङसां णो ॥ ३८ ॥

राज्ञ उत्तरेषां जस् शस् ङस् इत्येतेषां णो इत्ययमादेशो भवति। राआणो (पूर्ववत् नलोपे कृते ५-४४ ज=आ शे०स्प०) पेक्खन्ति ( पूर्ववत् दृशेः पेक्ख आदेशे झिस्थाने ७-४ न्तिः= राजानः पश्यन्ति ) राआणो पेक्ख (शसि रूपमेतत्स्पष्टं पूर्ववत्= राज्ञः पश्य) राइणो धणं (४-३ नलोपः २-२ जलोपः ५-४३ इः=राज्ञः) रण्णो (धणं २-२ जलोपः ५-४२ णद्वि० अन्त्यलोपश्च अलोपो ह्रस्वश्च संयोगे ४-१ सूत्रे द्रष्टव्यम् ॥ ३८ ॥

---

( १ ) आश्च सौ। का० पा०।

शस एत् ॥ ३९ ॥

राज्ञः परस्य शस ए इत्ययमादेशो भवति । राए पेक्ख (न-जयोः पूर्ववल्लोपः ४-१ आलोपः=राज्ञः ) ( पूर्ववत् पेक्खा-देशः=पश्य ) राआणो पेक्ख (पूर्वसूत्रे स्पष्टम् ) ॥ ३९ ॥

आमो णं ॥ ४० ॥

राज्ञ उत्तरस्यामः षष्ठीबहुवचनस्य णं इत्ययमादेशो भवति । राआणं ( ४-६ नलोपः ५-४४ ज=आ=राज्ञाम् ॥ ४० ॥

टा णा ॥ ४१ ॥

राज्ञ उत्तरस्याः टाविभक्तेः णा इत्ययमादेशः स्यात् । रा-इणा ( ४-६ नलोपे ५-४३ ज=इ शे० स्प०=राज्ञा ) ॥४१॥

ङसश्च द्वित्वं वान्त्यलोपश्च(१) ॥ ४२ ॥

राज्ञ उत्तरस्य ङसादेशस्य टादेशस्य च वा विकल्पेन द्वित्वं भवति । अन्त्यस्य च लोपः । रण्णो ( ५-३८ सूत्रे स्पष्टं ) रा-इणो धणं । (५-४१ सूत्रे स्प० ) रण्णा, राइणा कअं । (४-६ नलोपः ५-४१ टा=णा द्वित्वे अन्त्यजलोपे ह्रस्वे च ) ॥४२॥

इदद्वित्वे ॥ ४३ ॥

वेति निवृत्तम् । ङसादेशस्य टादेशस्य च अकृते द्वित्वे राज्ञ

---

( १ ) ङस् ङसि टाम् णोणौ ङण् २-२५९ । राजन् शब्दस्य अन। सहितस्य जस्य, ङस्, ङसि, टावचनानां णो, णा इत्यादेशौ, तयोः परयोर्ङण् इत्यादेशो वा भवति । टिलोपः । रण्णा । राजन् णा कृते 'अन्त्यहल' इति नकार लोपे जस्य ङण् राकारस्याकारस्य टिलोपे च कृते रण्णा इति रूपं भवति । इति वाल्मीकिः० ।

इत्वं भवति। राइणा, राइणो। (स्प०) कृते द्वित्वे त्वित्वं न भवति रण्णा, रण्णो ( ५-४२ सू० ५-३८ सूत्रे च स्पष्टं ) ॥४३॥

### आ णोणमोरङसि ॥ ४४ ॥

णोणमोः परयो राज्ञो जकारस्य आकारादेशः स्यात्। अङसि। षष्ठ्येकवचने न भवति। राआणो पेक्खन्ति। राआणो पेक्ख। ( ५-३८ सूत्रे व्याख्याताः )। राआणं धणं (५-४० सू० स्प० )। अङसीति किम्। राइणो, रण्णो धणं। शेषमदन्तवत्। राअं, राएहिं। राआ, राआदो, राआदु। राआ। ( ५-६ सूत्रेण दो-दु-हयः ङसेः स्थाने प्रयुज्यन्ते शे० स्प० ) राआहिंतो, आसुंतो ( ५-७ भ्यसः हिंतो-सुंतो-आदेशौ ) राअम्मि, राए ( ५-९ ङेः ए-म्मि ) राएसु, । ( ५-१२ एत्वे शे० स्प०) राजानं, राजभिः, राज्ञः, राजभ्यः, राज्ञि, राजसु ॥ ४४ ॥

### आत्मनोऽप्पाणो वा ॥ ४५ ॥

आत्मनोऽप्पाण इत्यादेशो भवति वा। अप्पा अप्पाणो ( ४-६ नूलोप० शे० स्प० ) ॥ ४५ ॥

### इत्वद्वित्ववर्जं राजवदनादेशे ॥ ४६ ॥

आत्मनोऽनादेशे राजवत्कार्यं स्यादित्वद्वित्वे वर्जयित्वा। आप्पा, अप्पाणो, अप्पणा, अप्पणो। ( ५-३८ सूत्रानुसारतः जसादीनां णोत्वादिकं सर्वं राजवत् ) आत्मा, आत्मानः, आत्मना, आत्मनः ॥ ४६ ॥

**ब्रह्माद्या आत्मवत्(१) ॥ ४७ ॥**

ब्रह्माद्याः शब्दा लक्ष्यानुसारेणात्मवत् साधवो भवन्ति । बह्मा, बह्माणो । (३–३ रलोपः ४–६ नलोपः शे० लक्ष्यानुसारेणात्मनो राजवत्कार्य्यं भवत्यतः ५–३६ सू० आत्वं,=ब्रह्मा, एव मुत्तरत्रापि) जुवा, जुवाणो (२–३१ य्=ज् ४–६ नलोपः शेषमात्मवत्) अद्धा, अद्धाणो । (३–३ वलोपः ३–५० द्वि० ३–५१ ध्=द् ४–६ न्लोपः शेषमात्मवत्) ब्रह्मन्, युवन्, अध्वन्, एवमादयो लक्ष्यानुसारेणावगन्तव्याः ॥४७॥

इति प्राकृतप्रकाशे लिङ्गविभक्त्यादेशः पञ्चमः परिच्छेदः ।

---

## अथ षष्ठः परिच्छेदः ।

---

**सर्वादेर्जस एत्वम् ॥ १ ॥**

सर्वादेरुत्तरस्य जस एत्वं भवति(२) । सव्वे (३·३ रलोपः ३–५० वद्वि०) जे (२–३१ य=ज एवमग्रेऽपि ज्ञेयम्) ते (४–६ दलोपः) के (६–१३ किम्=क) कदरे । (१२–३ त=दः) । सर्वे । ये । ते । के । कतरे ॥ १ ॥

(१) पुंस्यन आणो राजवच्च ८ । ३ । ५६ ।

पुंलिङ्गे वर्तमानस्यान्नन्तस्य आण इत्यादेशो वा भवति । पक्षे यथा दर्शनं राजवत् कार्यं भवति । हे० ।

(२) अकारान्ताद्भवति । तथा च हेमः अतः सर्वादेर्डेर्जसः ।८।३।५८ अतः किम् सव्वाओ रिद्धीओ इति ।

ङेः स्सिंम्मित्थाः(१) ॥ २ ॥

ङेः सप्तम्येकवचनस्य सर्वादिपरस्थितस्य स्थाने स्सिं, म्मि, त्थ इत्येत आदेशा भवन्ति । सव्वस्सिं, सव्वम्मि, सव्वत्थ (पूर्ववत् रलोपो वद्वित्वं च शे० स्प०) इअरस्सिं, इअरम्मि, इअरत्थ । (२-२ तलोपः शे० स्प०) सर्वास्मिन् इतरास्मिन् ॥ २ ॥

इदमेतत्किंयत्तद्भ्यष्टा इणा वा ॥ ३ ॥

इदम् , एतद्, किम् , यद् , तद् इत्येतेभ्यः टा इत्यस्य इणादेशो भवति वा । इमिणा ( ६-१४ इदम्=इम ४-१ अलोपः शे० स्प० ) एदिणा ( ४-६ दलोपः १२-३ त्=द् ४-१ अलोपः ) किणा ( ६-१३ किम्=कः ४-१ अलोपः ) जिणा तिणा । ( २-३१ य्=ज् ४-६ दलोपः ) पक्षे इमेण, एदेण, केण, जेण, तेण । ( ६-१४ इदम्=इद ५-४ सूत्रोदाहृत-( वच्छेण ) वददन्तकार्याणि पक्षान्तरे ज्ञेयानि एवमुत्तरत्रापि) अनेन, एतेन, केन, येन, तेन ॥ ३ ॥

आम एसिं ॥ ४ ॥

इदमादिभ्य उत्तरस्य आम एसिं इत्ययमादेशो वा भवति । इमेसिं ( पूर्ववददन्तत्वं ४-१ अलोपः शे० स्प० ) इमाण ( ५-४ आम्=ण ५-११ दीर्घः शे० स्प० ) एदेसिं ( ४-६ दलोपः एत इति जाते १२-३ त्=द् शे० स्प० ) एदाण ( ५-४ आम्=णा ५-११ दीर्घः ) केसिं ( ६-१३ किम्=क ४-१ अलोपः शे० स्प०) काण ( ५-४ आम्=ण

( १ ) ङेः स्सि म्मित्थाः—ङेः स्सं । का० पा० ।

५-११ दीर्घः ) जेसिं ( २-३१ य-ज ४-६ दलोपः ३-१ अलोपः शे० स्प०) जाण ( ५-४ आम्=ण ५-११ दीर्घः) तेसिं (पूर्ववददन्तत्वमकारलोपश्च शे० स्पष्टं) ताण(१) (५-४ आम्=ण ५-११ दीर्घ० शे० पू० एषाम्-आसाम् । एतेषाम्-एतासाम्, केषाम्, कासाम्, येषाम्, यासाम्, तेषाम्, तासाम् ॥ ४ ॥

किंयत्तद्भ्यो ङस आसः ॥ ५ ॥

किम् यद्, तद्, एभ्य उत्तरस्य ङस आस इत्ययमादेशो भवति वा । कास, कस्स । जास, जस्स । तास, तस्स(२)। (५-८ स्स एवमुत्तरत्रापि, अदन्तत्वमकारलोपादिकं च पूर्ववत्कार्य्यं ) ॥ ५ ॥

इद्भ्यः स्सा से(३) ॥ ६ ॥

ईकारान्तेभ्यः किमादिभ्य उत्तरस्य ङसः स्सा स इत्येतावादेशौ भवतः । किस्सा, कीसे, कीआ, कीए, कीअ, कीइ ।

---

( १ ) स्त्रीलिङ्गेऽप्येतानि रूपाणि । इमांसि । एदांसि । कांसि । जांसि । तांसि । तथाच वाल्मीकिः—

किं यत्तदोऽस्वमामि सुपि० ७-७-४० सु अम्, आम् वर्जिते सुपि परे किं यत्तद्भ्यो ङीव् वा स्यात् पक्षे यद् । तेनैतानि रूपाणि सिद्ध्यन्ति । वा० ।

( २ ) किं यत्तदोऽस्यमामि ८ । ३ । ३३-सिम-अम्-आम्-वर्जिते स्यादौ परे एभ्यः स्त्रियां ङीर्वा भवति ॥ हे० ।

( ३ ) ङसः स्सा सो स्त्रियाम् । इकारान्तेभ्यश्चाकारान्तेभ्यश्च स्त्रियां किमादिभ्य उत्तरस्य ङसः स्सासो इत्यादि-ङस्ग्रहणेन ङसि ङि ग्रहणम् का० अ० पा० ।

जिस्सा, जीसे, जीआ, जीए, जीअ, जीइ । तिस्सा, तीसे, तीआ, तीए, तीअ, तीइ । ( स्त्रियां ४-६ किम्=कः स्त्रीप्रत्यये आपि जाते ५-२४ बाहुलकात् आत्वे ईत्वे च कृते ङसः स्साः=संयोगे ह्रस्वः एवमेव यत्तद्भ्यामपि, पक्षे ५-२२ सूत्रेण ङसः स्थाने इदादयो यथायथं प्रत्येकं योज्याः, कस्याः यस्याः तस्याः ) ॥ ६ ॥

ङेर्हिं ॥ ७ ॥

किमादिभ्य उत्तरस्य ङेः हिं इत्ययमादेशो भवति वा । कहिं, कस्सिं, कम्मि, कत्थ । जहिं, जस्सिं, जम्मि, जत्थ । तहिं, तस्सिं, तम्मि, तत्थ (६-२ ङि=स्सिं, म्मि, त्थ=कस्मिन् , यस्मिन् , तस्मिन् ) ॥ ७ ॥

आहे इआ काले ॥ ८ ॥

किंयत्तद्भ्यो ङेः काले आहे, इआ इत्यादेशौ वा भवतः । काहे, जाहे, ताहे । कइआ, जइआ तइआ (पूर्ववदन्तत्वं, ४-१ अकारलोपः शे० स्प०) कीइं इत्यादयोऽपि । कदा यदा तदा ॥ ८ ॥

त्तो दो ङसेः(१) ॥ ९ ॥

किंयतद्भ्यो ङसेः त्तो दो इत्येतावादेशौ भवतः । कत्तो, कदो । जत्तो, जदो । तत्तो, तदो । ( स्पष्टान्येतानि पदानि ) (६-७ । ६-२ सूत्रविहिताः प्रत्यया अपि काले प्रयोक्तव्याः यथा=क-

(१) ङसेर्म्हा ८ । ३ । ६६ ॥ किं यत्तद्भ्यः परस्य ङसेः स्थाने म्हा इत्यादेशो वा भवति । कम्हा । जम्हा । पक्षे-काओ, जाओ, ताओ ॥ हेमः ॥

स्मिन्काले कदा, कहिं, कस्सि इत्यादि ज्ञेयम् ) ॥ ९ ॥

**तद् ओश्च ॥ १० ॥**

तद उत्तरस्य ङसेरोकारादेशो भवति वा । तो । अदन्तत्वे त इति जाते ४-१ अलोपः ततो ङसेः ओत्वे=तो तो, तत्तो, तदो ६-९ ङसेः त्तो, दो) ॥ १० ॥

**ङसा से ॥ ११ ॥**

वेति वर्तते । तदो ङसा सह से इत्ययमादेशो भवति पक्षे यथाप्राप्तम् । से (१)(स्प०) तास (६-५ ङस आसादेशः ४-१ त इत्यस्याकारलोपः) ॥ ११ ॥

**आमा सिं ॥ १२ ॥(२)**

तद आमा सह सिं इत्ययमादेशो वा भवति । सिं (स्प०) ताण(३) (६-४ सू० स्प०) तेषाम् तासाम् ॥ १२ ॥

**किमः कः ॥ १३ ॥(४)**

किंशब्दस्य सुपि परतः क इत्ययमादेशो भवति । को । (४-१ अलोपः ५-१ ओ) के । ( ४-१ अलोप ६-१ एत्वं )

---

( १ ) तस्य तस्याः। स्त्रियामपि से तिस्सा । ङस्ग्रहणे ङसिग्रहणं से तत्तो । का० पा ।

( २ ) वेदं तदेतदो ङसाम् भ्यां से सिमौ ८।४।८१॥ इति हेमस्तु इदमेतदोरपीच्छति ।

( ३ ) ताण । स्सिताणा । सिताण, तेसि । हेमचं-सिंइत्येव । का० पा० ।

( ४ ) किमः किं ८।३।८० किमः क्लीबे वर्तमानस्य स्यम्भ्यां सह किं भवति । किं कुलं-तुह । हेमः ॥

केण । (५-११ एत्वं ५-४ टा=ण) केहिं । (५-१२ ए ५-५ भिस्=हिं=कः, के, केन, कैः) ॥ १३ ॥

इदम इमः ॥ १४ ॥

सुपि परत इदम इम इत्ययमादेशो भवति । इमो (४-१ अ-लोपे ५-१ ओ) इमे (५-१ जस्=ए शे० पू०) इमं (५-३ अ-मोऽकारलोपः ४-१२ बि०शे०स्प०) इमेण (४-१२ अ=ए ५-४ टा=ण) इमेहिं (५-५ भिस्=हिं शे० पू०) ॥ १४ ॥

स्सास्सिमोरद्वा ॥ १५ ॥

स्स स्सिमोः परत इदमोऽदादेशो वा भवति । अस्स । इम-स्स । (५-८ ङस्=स्स शे०स्प०) अस्सि । इमस्सि (५-२ स्सि शे० स्प०) ॥ १५ ॥

ङेर्देन हः ॥ १६ ॥

इदमा दकारेण सह ङेः स्थाने हकारादेशो वा भवति । इह । (स्प०) पक्षे अस्सि, इमस्सि, इमम्मि (पूर्ववत्) ॥ १६ ॥

न त्थः ॥ १७ ॥

इदमः परस्य ङेः त्थ इत्ययमादेशो न भवति । "ङेः स्सिम्मि त्था" इति प्राप्ते प्रतिषिध्यते । इह, अस्सि, इमस्सि, इमम्मि, (शे० ६-१६ सू० द्रष्टव्यानि ॥ १७ ॥

नपुंसके स्वमो रिदमिणमिणमो ॥ १८ ॥

नपुंसकलिङ्गे इदमः स्वमोः परतः सविभक्तिकस्य इदं इणं इणमो इत्येते त्रय आदेशा भवन्ति । इदं, इणं इणमो, धणं (स्प-ष्टानि इदं ज्ञानम् ॥ १८ ॥

एतदः सावोत्वं वा ॥ १९ ॥

एतच्छब्दस्य सौ परतः ओत्वं वा भवति । नित्ये प्राप्ते विकल्प्यते । एस । एसो (४-६ दलोपः ३-२२ त=स एषः ॥१९॥

त्तो(१) ङसेः ॥ २० ॥

एतदः परस्य ङसेः त्तो इत्ययमादेशो भवति । एत्तो (संस्कृतानुसारं ४-६ सूत्रा द्दादलोपे एत इति जाते (६-२० ङसि=त्तो ६-२१ तलोपः) एदादो, एदादु, एदाहि । ४-६ दलोपः १२-३ त=द) ५-११ दीर्घ० ५-६ ङसि=दो, दु, हि) एतस्मात् ॥ २० ॥

त्तोत्थयोस्तलोपः ॥ २१ ॥

एतदस्तकारस्य त्तोत्थयोः परतो लोपो भवति । एत्तो । एत्थ (६-२ ङि=त्थ अन्यत्र पू०एतस्मिन) ॥ २१ ॥

तदेतदोः सः सावनपुंसके ॥ २२ ॥

तच्छब्दस्य एतच्छब्दस्य यस्तकारस्तस्य सकारादेशो भवति । अनपुंसके सौ परतः । सो पुरिसो । सा महिला(२) । एस, एसो । एसा (४-६ दलोपे-६-१९ ओत्वविकल्पः, स्त्रीत्वे-५-२४ आत्वं, महिलाशब्दस्ततसमः) साविति किम् । एदे । ते (४-६ दलोपः १२-३ त=द ६-१ जस्=ए=एते । =ते) एदं । तं । (४-६ दलोपः ५-३ अमाऽकारलोपः ४-१२ विं=एतम्, एनम्=तम) अनपुंसक इति किम । तं एदं धणं (नपुंसकत्वान्नतकारस्य सकारः ५-३० सोर्विंदुः पूर्ववदन्यत्=तदेतद्धनम् ) ॥ २२ ॥

(१) तो—एतो का० पा० । (२) सः पुरुषः । सा महिला ।

अदसो दो मुः ॥ २३ ॥

अदसो दकारस्य सुपि परतो मु इत्ययमादेशो भवति। अमू पुरिसो। अमू महिला(१)। (४-६ सूलोपे अमु जाते ५-१८ दीर्घः-४-६ सोर्लोपः) अमूओ पुरिसा। अमूओ महिलाओ(२)। (५-१६ जस्=ओ स्त्रियाम् ५-२० जस ओत्वं पूर्ववत् दीर्घादि) अमुं वणं अमूइ वणाइ (५-३ अमोऽकारस्य लोपः ४-१२ विं०, ५- २६ जस्=इ=पूर्वस्य दीर्घः=अदोवनम्। अमूनि वनानि ॥ २३ ॥

ह्श्च सौ(३) ॥ २४ ॥

अदसो दकारस्य सौ परतो हकारादेशो भवति। अह पुरिसो। अह महिला। अह वणं(४)। (४-६ अदसः सलोपः) हादेशोऽयमोत्वात्वबिन्दून् त्रिष्वपि लिङ्गेषु परत्वाद् बाधते ॥२४॥

पदस्य ॥ २५ ॥

अधिकारोऽयम् आशब्दाविधानात्(५)। यदित ऊर्ध्वमनुक्र-

---

(१) असौ पुरुषः। असौ महिला।

(२) अमी पुरुषाः। अमूर्महिलाः।

(३) म्मावये औ वा ८।३।८९। अदसोऽन्त्यव्यञ्जनलुकि दकारान्तस्य स्थाने ङ्यादेशो म्मौ परत अय-इअ इत्यादेशौ वा भवतः। अयम्मि इअम्मि। पक्षे अमुम्मि। हे०। अमुस्मिन्। अत्यत्र ६।२३ मु कृते यथाप्राप्तं विभक्त्यादेशाः।

(४) असौ पुरुषः। असौ महिला। अदोवनम्।

(५) 'द्वेर्दो' ५४ सूत्रात्प्रागित्यर्थः। तदुक्तम—

'पदस्येत्यधिकारोऽयं द्विशब्दस्य विधेरधः' ॥

मिष्यामः पदस्य तद्भवतीत्येवं वेदितव्यम् । तच्च (१)तत्रैवोदाह-रिष्यामः ॥ २५ ॥

युष्मदस्तं तुमं(२) ॥ २६ ॥

सावित्येव । युष्मदः पदस्य सौ (३)परतः तं तुमं इत्येतावादेशौ भवतः । तं आगदो । तुमं आगदो(४) (आङ्पूर्वक-क्तान्तस्य गमेः १२-३ त=द शौरसेन्यां २-२ सूत्रबाधेन न लोपः ५-१ ओ) ॥ २६ ॥

तुं चामि ॥ २७ ॥

युष्मदःपदस्य अमि परतः तुं इत्यादेशो वा भवति तुमं च । तुं पेक्खामि तुमं पेक्खामि(५) (१२-१-दृश्=पेक्ख ७-३ मि ७-३० आत्वं) ॥ २७ ॥

तुज्झे तुह्मे जसि ॥ २८ ॥

युष्मदः पदस्य जसि परतः तुज्झे, तुह्मे इत्येतावादेशौ भवतः । तुज्झे आगदा, तुह्मे आगदा(६) ॥ २८ ॥

वो च शसि ॥ २९ ॥

शसि युष्मदः पदस्य वो इत्यादेशो भवति चकारात्

---

(१) तत्र तत्र विधिसूत्रेषूदाहरणानि द्रष्टव्यानीत्यर्थः ।

(२) युष्मदस्तं, तुं, तुवं, तुह तुमं सिना ८।३।९०॥ सिना सह एते पञ्च आदेशा भवति ॥ हे० ।

(३) 'सौ' इति सप्तम्यन्तनिर्देशस्तु विषयविभागार्थम् । एव-मुत्तरत्रापि ।

(४) त्वम् आगतः । (५) त्वां पश्यामि ।

(६) यूयं आगताः ।

तुज्झे तुम्हे च । वो पेक्खामि । तुज्झे, तुम्हे, पेक्खामि(१) । (पेक्खामि ६–२७ सू० ९५०) ॥ २९ ॥

## टाङयोस्तइ तए तुमए तुमे ॥ ३० ॥

युष्मदुत्तरयोः टा, ङि इत्येतयोः तइ, तए, तुमए, तुमे, इत्यत आदेशा भवन्ति । टा–तइ, तए, तुमए, तुमे कअं(२) । ङि· तइ, तए, तुमए, तुमे ठिअं(३) (पूर्ववत् स्पष्टानि) ॥ ३० ॥

## ङसि तुमो तुह तुज्झ तुम्ह तुम्मः ॥ ३१ ॥

युष्मदः पदस्य ङसि तुमो, तुह, तुज्झ, तुम्ह, तुम्म इत्येत आदेशा भवन्ति । तुमो पदं । तुह, तुज्झ, तुम्ह, तुम्म पदं(४) । ॥ ३१ ॥

## आङि च ते दे ॥ ३२ ॥

आङि तृतीयैकवचने चकाराद् ङसि च परतो युष्मदः पदस्य ते, दे इत्येतावादेशौ भवतः । ते कअं । देकअं(५) । ते धणं देधणं(६) ॥ ३२ ॥

## तुमाइ च ॥ ३३ ॥

आङि युष्मदः पदस्य तुमाइ इत्ययमादेशो भवति । तुमाइ- कअं(७) ॥ ३३ ॥

---

(१) युष्मान् पश्यामि । (२) त्वयाकृतम् ।

(३) त्वयिस्थितं ।

(४) तवपदम । पदशब्दः संस्कृतसमो विकाराभाववान् महिला शब्दवत् 'तत्समास्ते येषु न विकारः' इति प्राकृतव्याकरणनियमः ।

(५) त्वयाकृतम् । (६) तवधनम् । (७) त्वयाकृतम् ।

तुज्झेहिं तुह्मेहिं तुम्मेहिं भिसि ॥ ३४ ॥

भिसि परतो युष्मदः पदस्य तुज्झेहिं, तुह्मेहिं, तुम्मेहिं इत्येत आदेशा भवन्ति । तुज्झेहिं, तुह्मेहिं, तुम्मेहिं कअं(१) ॥ ३४ ॥

ङसौ तत्तो तइत्तो तुमादो तुमादु तुमाहि ॥ ३५ ॥

ङसौ परतो युष्मदः पदस्य तत्तो, तइत्तो, तुमादो, तुमादु तुमाहि इत्येत आदेशा भवन्ति । तत्तो आगदो । तइत्तो, तुमादो, तुमादु, तुमाहि आगदो । त्वदागतः(२) ॥ ३५ ॥

तुह्माहिंतो तुह्मासुन्तो भ्यसि ॥ ३६ ॥

युष्मदः पदस्य पञ्चमी बहुवचने भ्यसि तुह्माहिंतो, तुह्मासुन्तो इत्येतावादेशौ भवतः । तुह्माहिंतो, तुह्मासुन्तो आगदो(३) ॥ ३६ ॥

वो भे तुज्झाणं तुह्माणमामि ॥ ३७ ॥

आमि परतो युष्मदः पदस्य वो, भे, तुज्झाणं, तुह्माणं इत्येत आदेशा भवन्ति । वो धणं । भे धणं । तुज्झाणं, तुह्माणं धणं(४) ॥ ३७ ॥

ङौ तुमम्मि ॥ ३८ ॥

युष्मदः पदस्य ङौ परतः तुमम्मि इत्यादेशो भवति । तुमम्मि ठिअं(५) । पूर्वोक्ताश्च* । तइप्रभृतयश्चत्वारोऽप्यादेशा भवन्ति ॥ ३८ ॥

---

(१) युष्माभिः कृतम् । (२) त्वत्-आगतः ।
(३) युष्मदागतः । (४) युष्माकन्धनं ।
(५) त्वयि स्थितम् ।

तुज्झेसु तुम्हेसु सुपि ॥ ३९ ॥

युष्मदः पदस्य सप्तमीबहुवचने तुज्झेसु, तुम्हेसु इत्येतावादेशौ भवतः। तुज्झेसु ठिअं। तुम्हेसु ठिअं(१) ॥ ३९ ॥

अस्मदो हं अहं अहअं सौ ॥ ४० ॥

अस्मदः पदस्य सौ परतो हं, अहं, अहअं इत्येत आदेशा भवन्ति। हं, अहं, अहअं करेमि(२) (१२-१५ कृञ्=कर ७-३ मि ७-३४ एत्वं) ॥ ४० ॥

अहम्मिरमि च ॥ ४१ ॥

अमि परतोऽस्मदः पदस्य अहम्मि इत्ययमादेशो भवति सौ च। अहम्मि पेक्ख। अहम्मि करेमि। मां प्रेक्षस्व। अहं करोमि ॥ ४१ ॥

मं ममं ॥ ४२ ॥

अमीति वर्तते। अस्मदः पदस्य अमि परतो मं ममं इत्येतावादेशौ भवतः मं, ममं पेक्ख(३) ॥ ४२ ॥

अम्हे जश्शसोः ॥ ४३ ॥

अस्मदः पदस्य जश्शसोः परतः अम्हे इत्ययमादेशो भवति। अम्हे आगदा(४)। अम्हे पेक्ख(५) ॥ ४३ ॥

णो शसि ॥ ४४ ॥

अस्मदः पदस्य शसि परतो णो इत्ययमादेशो भवति। णो पेक्ख। अस्मान् प्रेक्षस्व ॥ ४४ ॥

---

(१) युष्मासु स्थितम्। (२) अहं करोमि। (३) मां प्रेक्षस्व। (४) वयमागताः। (५) अस्मान् प्रेक्षस्व, पश्य वा।

आङि मे ममाइ ॥ ४५ ॥

अस्मदः पदस्य आङि परतो मे, ममाइ इत्येतावादेशौ भवतः । मे कअं । ममाइ कअं(१) ॥ ४५ ॥

ङौ च मइ मए ॥ ४६ ॥

अस्मदः पदस्य ङौ परतो मइ मए इत्येतावादेशौ भवतः । चकारात्तृतीयैकवचने च । मइ, मए ठिअं(२) । मइ, मए कअं(३) ॥ ४६ ॥

अह्मेहिं भिसि ॥ ४७ ॥

अस्मदः पदस्य भिसि अह्मेहिं इत्ययमादेशो भवति । अह्मेहिं कअं(४) ॥ ४७ ॥

मत्तो मइत्तो ममादो ममादु ममाहि ङसौ ॥ ४८ ॥

अस्मदः पदस्य ङसौ परत एत आदेशा भवन्ति । मत्तो गदो । मइत्तो, ममादो, ममादु, ममाहि गदो(५) । ( स्पष्टानि, क्तान्तस्य गमेः १.२–३– त=द ५–१ ओ ) ॥ ४८ ॥

अह्माहिंतो अह्मासुंतो(६) भ्यसि ॥ ४९ ॥

अस्मदः पदस्य भ्यसि परतो अह्माहिंतो, अह्मासुन्तो इत्येतावादेशौ भवतः । अह्माहिंतो, अह्मासुन्तो गदो(७) ॥४९॥

मे मम मह मज्झ ङसि ॥ ५० ॥

अस्मदः पदस्य ङसि परत एत आदेशा भवन्ति । मे धणं

---

(१) मयाकृतम् । (२) मयिस्थितम् । (३) मया कृतम् ।
(४) अस्माभिः कृतम् । (५) मत् गतः ।
(६) अम्हेहिंतो अम्हेसुन्तो । का० पा० (७) अस्मद् गतः ।

मम, मह, मज्झ धणं(१) ॥ ५० ॥

मज्झणो(२) अह्म अह्माण मह्मे आमि ॥५१॥

अस्मदः पदस्य आमि परत एत आदेशा भवन्ति । मज्झणो, अह्म, अह्माणं, अह्मे धणं । अस्माकं धनम् ॥ ५१ ॥

ममम्मि ङौ ॥ ५२ ॥

अस्मदः पदस्य ङौ परतो ममम्मि इत्यादेशो भवति । ममम्मि ठिअं(३) । पूर्वोक्तौ मइ, मए इत्येतौ च ॥ ५२ ॥

अह्मेसु सुपि ॥ ५३ ॥

अस्मदः पदस्य सप्तमीबहुवचने सुपि परतः अह्मेसु इत्ययमादेशो भवति । अह्मेसु ठिअं(४) ॥ ५३ ॥

द्वेर्दो ॥ ५४ ॥

पदस्येति निवृत्तम् । सुपीति वर्तते द्विशब्दस्य दो इत्ययमादेशो भवति सुपि परतः । दोहिं ( प्राकृते द्विवचनं नास्तीति नियमात्(५) द्विशब्दात् भिसः स्थाने ५–५ हिं शे० स्प० ) दोसु द्वाभ्याम् द्वयोः ॥ ५४ ॥

त्रेस्ति ॥ ५५ ॥

त्रिशब्दस्य सुपि परतः ति इत्यादेशो भवति । तीहिं । तीसु ( ५–१८ दीर्घः ५–५ भिस्=हिं ) त्रिभिः । त्रिषु ॥ ५५ ॥

तिण्णि(६) जश्शस्भ्याम् ॥ ५६ ॥

---

(१) मम धनम् । (२) मज्झाणो ॥ का० पा० ।

(३) मयि स्थितम् । (४) अस्मासु स्थितम् ।

(५) एवं सर्वत्र बोध्यम् ।

(६) तिस्मि–तिणा–तिणि–तिस्सि–तिणि । का० पा० ।

त्रिशब्दस्य जश्शस्भ्याम् सह तिण्णि इत्यादेशो भवति । तिण्णि आगदा । तिण्णि पेक्ख । ( स्पष्टानि ) त्रय आगताः । त्रीन् प्रेक्षस्व ॥ ५६ ॥

द्वेर्दुवे दोण्णि वा ॥ ५७ ॥

द्विशब्दस्य जस्शस्भ्यां सह दुवे, दोण्णि इत्येतावादेशौ भवतः । दुवे कुणन्ति । दोण्णि कुणन्ति । पक्षे दो कुणन्ति । द्वौ कुरुतः । दुवे पेक्ख । दोण्णि पेक्ख । दो पेक्ख (८-१३ कृञ्=कुण द्विवचनाभावनियमात् ४७-४ झि=न्ति=कुणन्ति शे०स्प०) द्वौ प्रेक्षस्व ॥ ५७ ॥

चतुरश्चत्तारो चत्तारि ॥ ५८ ॥

चतुश्शब्दस्य जश्शस्भ्यां सह चत्तारो, चत्तारि इत्येतावादेशौ भवतः । चत्तारो, चत्तारि पुरिसा कुणन्ति(१) । (१-२३ रु=रि ५-११ दीर्घः ५-२ जसो लोपः) चत्तारो पुरिसे पेक्ख(२)* ( ५-१२ अ=ए ५-२ शसो लोपः अन्यत् पूर्ववत्) ॥ ५८ ॥

एषामामो ण्हं ॥ ५९ ॥

एषां द्वित्रिचतुः शब्दानामामः स्थाने ण्हं इत्ययमादेशो भवति । दोण्हं धणं (६-५४ द्वि=दो शे० स्प०) तिण्हं धणं (६-५५ त्रि=ति० शे० स्प०) चतुण्हं(३) धणं (४-६ रलोपः शे०स्प० ॥५९॥

---

( १ ) चत्वारः पुरुषाः कुर्वन्ति ।

* भिसादौ रेफतकारयोर्लोपः । तेन चऊहिं । का० पा० ।

( २ ) चतुरः पुरुषान् पश्य । ( ३ ) चतुण्हं–चउण्हं । का०पा० ।

शेषोऽदन्तवद् ॥ ६० ॥

शेषः(१) सुब्विधिरदन्तवद्भवति। अकारान्ताद् भिसो हिं इत्ययमादेश उक्त इकारोकारान्तादपि भवति। अग्गीहिं। वाऊहिं (५-१८ सू० स्प०) एवं मालाहिं। णईहिं बहूहिं। अग्गिस्स (३-२ नलोपः ३-५० गद्वि० ५-८ ङस्=स्स वाउस्स (२-२ यलोपः शे० पू०) अग्गीदो। वाऊदो। (५-६ ङसि=दो) अग्गीसु वाऊसु (पूर्ववत् यलोपदीर्घौ०) एवं दोहिं (६-५४ द्वि=दो ५-५ भिस्=हिं) तीहिं (६-५५ त्रि=ति ५-१८ दीर्घः) चऊहिं (४-६ रलोपः २-२ तलोपः ५-१८ दीर्घः शे० पू०) ॥ ६० ॥

न ङिङस्योरेदातौ ॥ ६१ ॥

इकारोकारान्तानां ङिङस्योरदन्तवद् एकाराकारौ न भवतः। अग्गिम्मि ( ५-५२ ङि=म्मि शे० अग्गिस्सेतिवत्) वाउम्मि (२-२ यलोपः शे० स्प०) अग्गीदो वाऊदो अग्गीदु वाऊदु अग्गीहि वाऊहि (५-६ ङसि=दो, दु, हि शे० पू० स्प०) ॥ ६१ ॥

ए भ्यसि ॥ ६२ ॥

नेत्यनुवर्तते भ्यसि परत इकारोकारान्तयोरदन्तवदेत्वं न भवति। अग्गीहिन्तो वाऊहिन्तो अग्गीसुन्तो वाऊसुन्तो (५-६, १२ सूत्रयोर्बाधः ५-११ दीर्घः ५-७ भ्यस्=हिन्तो, सुन्तो शे० पू० ॥ ६२ ॥

द्विवचनस्य बहुवचनम् ॥ ६३ ॥

(१) शेषेषु विधि। का० पा०।

सर्वासां विभक्तीनां सुपां तिङां च द्विवचनस्य बहुवचनं प्रयोक्तव्यम्। वृक्षौ, वच्छा। वृक्षाभ्याम्, वच्छेहिं। वच्छाहिन्तो। वृक्षयोः, वच्छेसु। वच्छाण। (स्पष्टं पञ्चमपरिच्छेदे व्याख्याताः) तिङां यथा, तिष्ठतः चिट्ठन्ति (१२-१६ स्था=चिट्ठ ७-४ झि=न्ति) ॥ ६३ ॥

चतुर्थ्याः षष्ठी ॥ ६४ ॥

इति प्राकृतसूत्रेषु षष्ठः परिच्छेदः ॥

चतुर्थीविभक्तेः स्थाने षष्ठीविभक्तिर्भवति(१)। बह्मणस्स

---

(१) तादर्थ्यङेर्वा ८।३।१३२ तादर्थ्यविहितस्य ङेश्चतुर्थ्येकवचनस्य स्थाने षष्ठी वा भवति ॥ देवस्स देवाय। देवार्थमित्यर्थः। ङेरिति किम् देवाण ॥

वधाड्डाइश्च वा ८।३।१३३ वधशब्दात्परस्य तादर्थ्यङेर्डित् आइः षष्ठी च वा भवति। वहाइ, वहस्स, वहाय। वधार्थमित्यर्थः॥

क्वचिद् द्वितीयादेः ८।३।१३४। द्वितीयादीनां विभक्तीनां स्थाने षष्ठी भवति क्वचिद्। सीमाधरस्स वन्दे। तिस्सा मुहस्स भरिमो। अत्र द्वितीयायाः षष्ठी। धणस्स लद्धो धनेन लब्ध इत्यर्थः। चिरस्स मुक्का चिरेण मुक्तेत्यर्थः। अत्र तृतीयायाः॥

चोरस्स बीहइ। चोराद्बिभेतीत्यर्थः अत्र पञ्चम्याः। पिट्ठीए केस-भारो अत्र सप्तम्याः॥

पञ्चम्यास्तृतीया च ८।३।१३६। पञ्चम्याः स्थाने क्वचित् तृतीया सप्तम्यौ भवतः। चोरेण बीहइ। चोराद्बिभेतीत्यर्थः। अन्तेउरे रमिउ मागओ राया। अन्त पुराद् रन्त्वा गत इत्यर्थः।

द्वितीयातृतीययोः सप्तमी ८।३।१३५। द्वितीया तृतीययोः स्थाने क्वचित्सप्तमी भवति। नयरे न जामि। अत्र द्वितीयायाः।

देहि (३-३ रलोपः ५-१० ङस्=स्स देहीति संस्कृतसमः) बह्मणाणं देहि। ब्राह्मणाय देहि। ब्राह्मणेभ्यो देहि (५-११ आमि दीर्घः ५-४० आम्=णं शे० स्प०) ॥ ३४ ॥

इति प्राकृतप्रकाशे सर्वनाम विधिर्नाम षष्ठः परिच्छेदः ॥

## अथ सप्तमः परिच्छेदः।

### ततिपोरिदेतौ ॥ १ ॥

त तिप् इत्येतयोरेकस्य स्थाने इत् एत् इत्येतावादेशौ भवतः। पढइ ( २-२४ ठ्=ढ शे० स्प० ) पढए सहइ सहए। (यथाक्रमं तिपइः तस्य एः) पठति। पठतः। सहति। सहते॥१॥

### थास्सिपोः सि से ॥ २ ॥

थास् सिप् इत्येतयोरेकैकस्य स्थाने सि से इत्येतावादेशौ भवतः। पढसि। पढसे। सहसि। सहसे। ( पूर्ववत् ठ्=ढ अन्यत्सुगमम् ॥ २ ॥

---

तिसु तेसु अळं किआ पुहवी। अत्रतृतीयायाः।

सप्तम्या द्वितीया ८।३।१३७। सप्तम्याः स्थाने क्वचिद् द्वितीया भवति विज्जोयं भरइ रत्ति।

आर्षे तृतीयाऽपि दृश्यते। तेणं कालेणं तेणं समयेण। तस्मिन् काले तस्मिन् समय इत्यर्थः।

प्रथमाया अपि द्वितीया दृश्यते। चउवीसं पि जिणवरा। चतुर्विंशतिरपि जिनवरा इत्यर्थः। इति हेमः।

इडूमिपो मिः ॥ ३ ॥

इट् मिप् इत्येतयोः स्थाने मिर्भवति । पढामि । हसामि(१) सहामि ( ७-३० आत्वम् ) ॥ ३ ॥

न्तिहेत्थामोमुमा बहुषु(२) ॥ ४ ॥

बहुषु वर्तमानानां तिङांस्थाने न्ति, ह, इत्था, मा, मु, म इत्येत आदेशा भवन्ति । प्रथमपुरुषस्य, रमंति पढंति । हसंति । (२-२४ ठ्=ढ झि=न्ति कृते ४-१७ विं० अ० स्प०) मध्यमस्य, रमह पढह हसह पढित्था(३) । ( मध्य० थ=ह, इत्थ इति द्वावादेशौ शे०स्प०) उत्तमस्य पढामो पढमु पढम (उत्तमस्य, मो, मु, म इत्येत आदेशाः ७-३० आत्वविकल्पः शे० स्प० ) ॥४॥

अत ए से ॥ ५ ॥

नित्यार्थं वचनं यतो विशेषणम् ततिपोः सिप्थासोर् ए से इत्यादेशावत एव परौ(४) भवतो नान्यस्मात् । ततिपोः, रमए ।

---

( १ ) अदन्ताद्धातोर्म्मौ परे अत आत्व वा भवति ५ । ५ ॥ प्राकृतव्याकरणम् तथाच तत्रैव अकारान्ताद्धातोर्मोमुमेषु परेषु अत इत्व आत्वञ्च भवति, क्वचिदेत्वमपि । ५-६ ॥ हसिमो, हसामो, हसेमो, हसिमु, हसेमु इत्यादि । इति अत्वं, इत्वं आत्वं, एत्वं च प्रतिपादित मकारान्तधातोः ।

( २ ) प्रथम पुरुषस्य न्ति, मध्यमस्य ह, इत्था । उत्तमस्य मो, मु, म, इति विवेकः । तथाच हेमः —

बहुष्वाद्यस्य न्ति, न्ते, इरे ८ । ३ । १४२ ।

मध्यमस्येत्था, हचौ । ८ । ३ । १४३ ।

तृतीयस्य मो, मु, माः । ८ । ३ । १४४ । इति ।

( ३ ) पढीत्था, पढित्थ । का०पा० । (४) नित्यं-भवतः । का०पा० ।

पढए। सिप्थासोः रमसे पढसे। ( रमू-त=ए=रमए। २-२४ ठ=ढ-पढ-ति=एपढए। रमू-थास्=से=रमसे। पढ-सिप्= से=पढसे) अत इति किम्। होइ ( ८-१ भू-हो ७-१ ति=इ ) भवति ॥ ५ ॥

अस्ते(१)र्लोपः ॥ ६ ॥

अस्तेर्धातोः थास्सिपोरादेशयोः परतो(२) लोपो भवति। सुत्तो सि (७-२ सिप्=सिशे० ३-१ सू० स्प०) पुरिसो सि। (१-२३ सू० स्प०) सुप्तोऽसि। पुरुषोऽसि ॥ ६ ॥

मिमोमुमानामधो हश्च ॥ ७ ॥

मिमोमुमानामस्तेः परेषामधो हकारः प्रयोक्तव्यः। अस्तेश्च लोपः। गओ म्हि गअ म्हो, गअ म्हु गअ म्ह। (२-२ तलोपः ५-१ ओ) (७-२ मिप्=मि ७-३ मस्=मा, मु म, ५-२ जसो लोपः) गतोऽस्मि गताः स्मः ॥ ७ ॥

यक ईअइज्जौ ॥ ८ ॥

यकः स्थाने ईअ इज्ज इत्यादेशौ भवतः। पढीअइ। पढिज्जइ। सहीअइ। सहिज्जइ। (स्प०) पठ्यते। सह्यते ॥ ८ ॥

नान्त्यद्वित्वे ॥ ९ ॥

धातोरन्त्यद्वित्वे सति यक ईअ इज्ज इत्यादेशौ न भवतः। हस्सइ। गम्मइ(३) (८-५८ गमादीनां द्वित्वं) ॥ हस्यते। गम्यते।

( १ ) असेर्लोपः। का० पा०।

( २ ) परयोः। असेर्धातोः परतः थास्सिपोर्लोपः। का० पा०।

( ३ ) "त्यादेः ८।१।९ तिवादीनां स्वरस्य स्वरे परे सन्धिर्न। हेम० एवं सर्वत्र सन्ध्यभावो बोध्यः।

गमादीनां विकल्पेन[द्वित्वविधानात् (१)]द्वित्वविधाने उक्तावादेशौ न भवतः द्वित्वाविधाने तु भवत एव। गमीअइ गमिज्जइ (पक्षे ७-८ ईअ इज्ज-आदेशौ शे० पू० स्प०) ॥ ९ ॥

न्तमाणौ शतृशानचोः ॥ १० ॥

शतृ शानच् इत्येतयोरेकैकस्य न्त, माण इत्येतावादेशौ भवतः। पठन्तो। पठमाणो। हसन्तो। हसमाणो (पूर्ववत् पढ, शतृ=न्तजाते ५-१ ओ एवं शानचोऽपि माण आदेशः ५-१ ओत्वं च) ॥ १० ॥

ई च स्त्रियाम् ॥ ११ ॥

स्त्रियां वर्तमानयोः शतृशानचोरीकारादेशो भवति, न्तमाणौ च। हसई, हसन्ती, हसमाणा। वेबई, वेबन्ती, वेबमाणा (वेप० २-१५ प=व शे० स्प० ई, न्ती, माणा) ॥ ११ ॥

धातोर्भविष्यति हिः ॥ १२ ॥

भविष्यति काले धातोः परो हिशब्दः प्रयोक्तव्यः। होहिइ(२) (८-१ भू=हो ७-१ ति=इ) हसिहिइ (७-३३ अ=इ शे० पूर्ववत्) होहिन्ति। हसिहिन्ति। (७-४ झि=न्ति ४-२७ वि० शे० पूर्व०) भविष्यति। हसिष्यति। भविष्यन्ति। हसिष्यन्ति ॥ १२ ॥

उत्तमे स्सा हा च ॥ १३ ॥

भविष्यत्युत्तमे स्सा हा इत्येतौ प्रयोक्तव्यौ चकाराद् हिश्च।

(१) [ ] अयं पाठो न सार्वत्रिकः। (२) होहीइ। का० पा०।

होस्सामि होहामि होहिमि होस्सामो होहामो होहिमो(१) (७–३ मिप्=मि, मस्=मो। शे० स्सा, हा, हि आदेशाः ७–३० इ, आ। शे० सुगमम्) इत्यादि। भविष्यामि भविष्यामः॥ १३॥

**मिना स्सं वा॥ १४॥**

भविष्यत्युत्तमे मिना सह धातोः परः स्संशब्दः प्रयोक्तव्यो वा। होस्सं। पक्षे होस्सामि होहामि होहिमि(२) (८–१ भू=हो धातोः मिनासह स्सं, पक्षे धातोः उत्तमेपरे ७–१४ सू० स्प०॥१४॥

**मोमुमैर्हिस्सा हित्था॥ १५॥**

भविष्यति काल उत्तमे बहुवचनादेशस्य मो मु म इत्येतैः सह हिस्सा हित्था इत्येतावादेशौ वा भवतः। होहिस्सा होहित्था हसिहिस्सा हसिहित्था। एवं मुमयोरपि इत्यादि (७–४ सूत्रविहितैर्मोमुमैः सह। शे० स्प०) भविष्यामः हसिष्यामः। पक्षे होहिमो होस्सामो(३) होहामो हसिहिमो हसिस्सामो हसिहामो। (पक्षे ७–१३ सूत्रविहितरूपाणि द्रष्टव्यानि सेट्हसधातोरपि तथैव हि–स्सा, हा इत्येते प्रयोक्तव्याः एवं ७–४ सूत्रे शिष्टयोर्मुमयोरपि प्रयोगः–यथा होहिमु–होहिम इत्यादयः)॥ १५॥

**कृदाश्रुवचिगमिरुदिदृशिविदिरूपाणां काहं दाहं सोच्छं वोच्छं गच्छं रोच्छं दच्छं वेच्छं॥ १६॥**

भविष्यति काल उत्तमैकवचने कृञादीनां स्थाने यथासंख्यं

---

(१) म, मु, होस्सामु। का० पा०।

(२) हसिस्सं इत्यादयः। का० पा०।

(३) होहिस्सामो। का० पा०।

काहं प्रभृतय आदेशा भवन्ति । काहं, करिष्यामि । दाहं, दास्यामि, सोच्छं, श्रोष्यामि । वोच्छं, वक्ष्यामि । गच्छं, गमिष्यामि । रोच्छं, रोदिष्यामि । दच्छं, द्रक्ष्यामि । वेच्छं, वेत्स्यामि । इत्यादि(१) ॥ १६ ॥

श्र्वादीनां त्रिष्वप्यनुस्वारवर्जं हिलोपश्च वा ॥ १७ ॥

श्रुइत्येवमादीनां प्रथममध्यमोत्तमेषु त्रिष्वपि पुरुषेषु परतो भविष्यति काले सोच्छं इत्यादय आदेशा भवन्ति । अनुस्वारं विहाय हिलोपश्च वा । सोच्छिइ, सोच्छिहिइ । श्रोष्यति । सोच्छिंति सोच्छिहिंति श्रोष्यन्ति ( सोच्छादेशे ७-३३ अ=इ ७-१ ति, त=इ पक्षे ७-१२ हि ७-४ झि=न्ति ४-१७ विं० शे० पू० ) । सोच्छिसि सोच्छिहिसि । श्रोष्यसि (७-२ सिप्, थास्=सि शे० पू० ) सोच्छित्था सोच्छिहित्था । श्रोष्यथ । ( ७-४ थ=इत्था ) पूर्ववत्=हि ) सोच्छिमि सोच्छिहिमि श्रोष्यामि (७-३ मिप् मि शे० पू०) सोच्छिमो सोच्छिहिमो सोच्छिमु सोच्छिहिमु सोच्छिम सोच्छिहिम सोच्छिस्सा मो सोच्छिस्सामु सोच्छिस्साम(२) । श्रोष्यामः । (७-४ मस्=मा मु, म एव ७-१२ हि प्रयोग । ७-१३ स्सामप्रयोगे मोमुमानां प्रयोगश्चाऽन्ते कार्य्यः) एवं वोच्छादिरपि ॥ १७ ॥

---

( १ ) रूपग्रहणादन्यत्रापि । यथा मोछं, पेछं । मोक्ष्यामि, प्रेक्ष्यामि । का. पा. ।

( २ ) सोछिहामो, मु म सोछिस्सा सोछिहित्था, बोछिहिस्सा । का. पा. ।

उ सु मु विध्यादिष्वेकस्मिन् ॥ १८ ॥

विध्यादिष्वेकस्मिन्नुत्पन्नस्य प्रत्ययस्य यथासंख्यम् उ, सु, मु इत्येत आदेशा भवन्ति । हसउ । हससु । हसमु । (स्पष्टं ७-१ सूत्रस्य बाधः) हसतु । हस । हसानि ॥ १८ ॥

न्तुहमो बहुषु ॥ १९ ॥

विध्यादिषु बहुषूत्पन्नस्य प्रत्ययस्य यथासंख्यं न्तु ह मो इत्येत आदेशा भवन्ति । हसन्तु हसह हसामो (७-४ सूत्रस्य बाधः शे० स्प० ॥ १९ ॥

वर्तमानभविष्यदनद्यतनयोर्ज्ज ज्जा वा ॥ २० ॥

वर्तमाने भविष्यदनद्यतने विध्यादिषु चोत्पन्नस्य प्रत्ययस्य ज्ज, ज्जा इत्येतावादेशौ वा भवतः । पक्षे यथाप्राप्तम् । वर्तमाने तावत् , होज्ज । होज्जा हसेज्ज । हसेज्जा । पक्षे होइ हसइ । इत्यादि । (८-१ भू=हो पक्षे ७-१ ति=इ एवं हसधातोरपि ज्ञेयम् ) भविष्यदनद्यतने, होज्ज । होज्जा । पक्षे होहिइ इत्यादि विध्यादिष्वेवम्(१) । ( भविष्यत्यपि होज्जेत्यादि पूर्व० पक्षे ७-१२ सू० स्प० विध्यादिष्वपि होज्ज, होज्जा पक्षे होउ, सु, मु, इत्या०) ॥ २० ॥

मध्ये च ॥ २१ ॥

वर्तमानभविष्यदनद्यतनयोर्विध्यादिषु च धातुप्रत्यययोर्मध्ये ज्ज, ज्जा इत्येतावादेशौ वा भवतः । वर्तमाने, होज्जइ होज्जाइ । पक्षे यथाप्राप्तम् । विध्यादिषु होज्जउ होज्जाउ (विकरण-

(१) पुरुषत्रयेऽपि एकवचनबहुवचनरूपाणि बोध्यानि। का.पा.।

स्थाने अत्रादेशौ बोध्यौ शे० स्पष्ट०) भवेदित्यादि ॥ २१ ॥

नानेकाचः ॥ २२ ॥

वर्तमानभविष्यदनद्यतनयोर्विध्यादिषु चानेकाचो धातोः प्रत्यये परे मध्ये ज्ज ज्जा इत्येतावादेशौ न भवतः किन्त्वन्त एव भवतः । हसइ (७-१ सूत्रे स्प०) तुवरइ । (८-४ नित्व-रा=तुवर ७-१ त=इ) । अन्ते यथा, हसेज्ज । हसेज्जा । तुवरेज्ज । तुवरेज्जा । ७=३४ अ=ए=हसे, एवमेव भविष्य द्विध्यादिषु ज्ञेयं) एवमन्येऽप्युदाहर्तव्याः ॥ २२ ॥

ईअ(१) भूते ॥ २३ ॥

भूते काले धातोः प्रत्ययस्य ईअ इत्ययमादेशो भवति । हुवीअ । असीअ (८-१ भू=हुव-ति=ईअ. एवमग्रे) अभवत् । अहसत् ॥ २३ ॥

एकाचो हीअ ॥ २४ ॥

भूते काले एकाचो धातोः प्रत्ययस्य हीअ इत्ययमादेशो भवति । होहीअ । (स्पष्टं) अभूत् ॥ २४ ॥

अस्तेरासिः ॥ २५ ॥

अस्तेर्भूते काले एकस्मिन्नर्थे आसि इति निपात्यते(२)आसि

(१) इअं, ईअ । इअभूते भूते वर्तमानाद्धातोः प्रत्ययस्य ईअ आदेशः स्यात् । आसीअ, गहीअ, हसीअ, पढीअ । आसीत्, अग्रहीत्,—अहसत्, अपठत्, इत्यादयः । का० पा० ।

(२) तेनास्ते रास्यहेसी । ८ । ३ । १६४। अस्तेर्धातोस्तेन भूतार्थेन प्रत्ययेन सह आसि, अहेसि इत्यादेशौ भवतः। आसि सो, तुमे, अहं वा । जे आसि ये आसन्नित्यर्थः । अहं अहेसि । हे० ।

राआ । आसि बहू । राआ ५-३६ सू०स्प० बहू ४-१९ सू० स्प० शे० सुगमं) आसीद्राजा । आसीद्वधूः ॥ २५ ॥

णिच एदादेरत आत् ॥ २६ ॥

णिच्प्रत्ययस्य एकारादेशो भवति धातोरादेरकारस्य च आत्वं भवति । कारेइ हासेइ पाढेइ । (८-१२ कृञ्=कर, णिच्=ए ७-१ ति=इ शे०स्प० एवं हासेइ प्रभृतयः) कारयति । हासयति । पाठयति ॥ २६ ॥

आवे च ॥ २७ ॥

णिच आवे इत्ययमादेशो भवति चकारात् पूर्वोक्तं च । करावेइ । हसावेइ । पढावेइ । कारावेइ इत्यादि (णिच आवे कृत धातोरादेरकारस्यात्वं वा भवति, उदाहृतपदेषु तादृशकार्यदर्शनात् शे० स्प०) ॥ २७ ॥

आविः क्तकर्मभावेषु वा ॥ २८ ॥

णिच आविरादेशो भवति वा क्तप्रत्यये परतो भावकर्मणोश्च । कराविअं । हसाविअं । पढाविअं । (८-१२ कृञ्=कर, णिच् आवि २-२ तलोपः ५-३० सो बिंदुः=कारितं-एवमग्रेऽपि) कारिअं । हासिअं । पाढिअं । (पक्षे संस्कृतानुसारं कारितमिति सिद्धे ३-२ तलोपः ५-३० बिं पाढितमत्र २-२४ ठ=ढ शे० पू०) भावकर्मणोश्च, कराविज्जइ । हसाविज्जइ । पढाविज्जइ । णिच आवि ७-१ त=इ कृते ७-२१ यकःस्थाने ज्ज-एवमग्रे) कारिज्जइ । हासिज्जइ । पाढिज्जइ । (णिचि=कारितिजाते ७-२१ यकः=ज्ज एवमग्रे) कारितम् । हासितम् । पाठितम् ।

कार्यते । हास्यते । पाठ्यते ॥ २८ ॥

नैदावे ॥ २९ ॥

क्तभावकर्मसु णिच्प्रत्ययस्य एत् आवे इत्येतावादेशौ न भवतः । कारिअं (णिचि=कारि २-२ तलोपः ५-३० विं) करावि‍अं (७-२८ सूत्रे द्रष्टव्यं) कारिज्जई काराविज्जई (७-२७ सूत्रात् चकारानुकर्षणात् पक्षे तत्पूर्वसूत्रानुसारं धातोरादे रकारस्यात्वं भवति शेषं ७-२८ सू० द्रष्टव्यं ॥ २९ ॥

अत आ मिपि वा ॥ ३० ॥

अकारान्ताद्धातोर्मिपि परत आकारादेशो भवति वा । हसामि, हसमि । (स्पष्टे) ॥ ३० ॥

इच्च बहुषु ॥ ३१ ॥

मिपो बहुषु परतोऽत इकारादेशो भवति चकारादाकारश्च । हसिमो, हसामो, हसिमु हसामु(१) । (७-४ झि=मो, मु शे० स्प०) ॥ ३१ ॥

क्ते ॥ ३२ ॥

क्तप्रत्यये परतोऽत इर्भवति । हसिअं (२-२ तलोपः शे० स्प० ५-३० विं०) पढिअं(२) (२-२४ ठ=ढ शे०पू०) ॥३२॥

ए च क्त्वातुमुन्तव्यभविष्यत्सु ॥ ३३ ॥

क्त्वा, तुमन्, तव्य इत्येतेषु भविष्यति काले च अत एत्वं भवति चकारादिश्च । हसेऊण । हसिऊण (४-२३ त्का=ऊण शे० स्प०) हसेउं । हासिउं । (२-२ तुमः तलोपः ४-१२

(१) हसामः । (२) हसितं-पाठ ।

मविं० शे० पूर्व०) हसेअव्वं हसिअव्वं (२-२ तलोपः ३-५० वद्वि० ३-५० सोर्विन्दुः शे० स्प०) हसेहिइ हसिहिइ(१)। (७-१२ धातोः परो हि प्रयोगः शे० स्प०)॥ ३३॥

लादेशे वा॥ ३४॥

**इति वररुचिकृत प्राकृतसूत्रेषु सप्तमः परिच्छेदः॥**

लकारादेशे वा परतोऽत एत्वं भवति वा। हसेइ, हसइ। पढेइ, पढइ। (७-१ ति=इ शे० स्प०) हसेन्ति, हसन्ति (७-४ झि=न्ति ४-१७ विं०) हसेउ, हसउ(२)। (७-१८ ति=उ शे० स्प०)॥ ३४॥

इति प्राकृतप्रकाशे तिङ्विधिर्नाम सप्तमः परिच्छेदः॥

## अथ अष्टमः परिच्छेदः।

**भुवो हो हुवौ॥ १॥**

भू सत्तायाम् एतस्य धातोर्हो, हुव इत्येतावादेशौ भवतः। होइ (७-५ सू० स्प०) हुवइ (७-१ ति=इ) होन्ति, हुवन्ति(३) (७-४ झि=न्ति ४-१७ विं शे० स्प०)॥ १॥

**क्ते हुः(४)॥ २॥**

(१) हसित्वा-हसितुम् हसितव्यम्।

(२) हसति-पठति-हसन्ति-हसतु। (३) भवति-भवन्ति।

(४) क्ते हूः ८।४।६४। हूअं अणुहूअं पहूअं अविति हुः ८।४।६१ विद्धर्जे। हुन्ति-हुन्तो। हेम०।

भुवः क्तप्रत्यये परतो हु इत्यादेशो भवति। हुअं(१)(२-२ तलोपः ५-३० विं० ॥ २ ॥

प्रादेर्भवः ॥ ३ ॥

प्रादेरुत्तरस्य भुवो भव इत्ययमादेशो भवति । पभवइ(३-३ रलोपः ॥ ७-१ ति=इ) उब्भवइ (३-१ दलोपः ३-५० अद्वि० ३-५१ भ्=ब् शे० पू०) सम्भवइ, परिभवइ(२) ४-१७ वर्गा-न्त० शे० स्प०) ॥ ३ ॥

त्वरस्तुवरः ॥ ४ ॥

जित्वरा सम्भ्रमे अस्य धातोस्तुवर इत्ययमादेशो भवति। तुवरइ(३) (७-१ । त=इ शे० स्प०) ॥ ४ ॥

क्ते तुरः ॥ ५ ॥

क्तप्रत्यये तुर इत्ययमादेशो भवति । तुरिअं(४) (७-३२ अ=इ २-२ तलोप ५-३० विं०) ॥ ५ ॥

घुणो घोलः ॥ ६ ॥

घुण, घूर्ण भ्रमणे अस्य धातोर्घोल इत्ययमादेशो भवति। घोलइ(५) (७-१ ति=इ ॥ ६ ॥

णुदो णोल्लः(६) ॥ ७ ॥

---

( १ ) भूतम्, तः । ( २ ) प्र, सम्, परि, भवति ।

( ३ ) त्वरते । ( ४ ) त्वरितम् । ( ५ ) घोर्णते-घूर्णते ।

( ६ ) णुदो ल्लोणः । णुदप्रेरणे अस्य धातोर्ल्लोण इत्यादेशो भवति । ल्लोणइ पल्लोणइ । णुदेर्लोण-लोणाइ पल्लोणाइ । णुदो णोलः-णोलइ-णोल्लइ गमादित्वात् द्वित्वं-णुदोल्लोणः । लोणइ पलो-णइ का० पा० ।

णुद प्रेरणे अस्य धातोर्णोल्ल इत्ययमादेशो भवति । णोल्लइ । पणोल्लइ(१) (३-३ प्र-इत्यस्य रेफलोपः शे० पू० स्प) ॥७॥

दूङो दूमः ॥ ८ ॥

दूङ् परितापे अस्य धातोर्दूमादेशो भवति । दूमइ(२) ( स्पष्टम् ) ॥ ८ ॥

पटेः फलः ॥ ९ ॥

पट् गतौ अस्य धातोः फल इत्ययमादेशो भवति । फलिअं (७-३२ अ=इ २-२ तलोपः ५-३० वि०) (१-२८ सू० स्प०) हिअअं(३) ॥ ९ ॥

पदेः पालः ॥ १० ॥

पद गतौ अस्य धातोः पाल इत्ययमादेशो भवति । पालेइ(४) (७-३४ अ=ए ७-१ ति=इ) ॥ १० ॥

वृषकृषमृषहृषामृतोऽरिः ॥ ११ ॥

वृषादीनामृतः स्थाने अरि इत्यादेशो भवति । वरिसइ । करिसइ । मरिसइ । हरिसइ(५) । (२-४२ ष=स ७-१ ति=इ एवमुत्तरत्रापि कृष, मृष, मृश-हृष) ॥ ११ ॥

ऋतोऽरः ॥ १२ ॥

ऋकारान्तस्य धातोर्ऋतः स्थाने अर इत्यादेशो भवति ।

---

( १ ) नुदति-नुदते । ( २ ) दूयते-दुनोति ।
( ३ ) पटितं हृदयम् । ( ४ ) पद्यते ।
( ५ ) वर्षति । कर्षति । मृष्यति । हृष्यति-भौवादिकस्य हर्षति ।

मृ,मरइ । सृ, सरइ । वृ, वरइ(१) (७-१=इ शे० स्प०) ॥१२॥

कृञः कुणो वा ॥ १३ ॥

डुकृञ् करणे अस्य धातोः प्रयोगे कुणो वा भवति । कुण-इ, करइ(२) ॥ (पूर्ववत् स्प०) ॥ १३ ॥

जृभो जम्भाअः ॥ १४ ॥

जभि, जृभी गात्रविनामे अस्य धातोर्जंभाअ इत्ययमादेशो भवति । जम्भाअइ(३) (स्पष्टम्) ॥ १४ ॥

ग्रहेर्गेण्हः ॥ १५ ॥

ग्रह उपादाने अस्य धातोर्गेण्हो भवति । गण्हइ(४) (स्पष्टम्) ॥ १५ ॥

घेत् क्त्वातुमुन्तव्येषु ॥ १६ ॥

ग्रहेर्घेत् इत्ययमादेशो भवति क्त्वातुमुन्तव्येषु परतः । घे-त्तूण (४-२३ त्का=ऊण । ३-५० द्वि०) घेत्तुं (३-५० तद्वि० २-१२ मर्बि) घेत्तव्वं(५) (पूर्ववत्तलोपतद्वि० ३-२ यलोपः ३-५० वद्वि० ५-३० विं०) ॥ १६ ॥

कृञः का भूतभविष्यतोश्च ॥ १७ ॥

भूतभविष्यतोः कालयोः कृञः का इत्ययमादेशो भवति । चकारात् क्त्वातुमुन्तव्येषु परतः । काहीअ (७-२४ भूते-क्तक्तवतोः स्थाने अथवा भूतभविष्यदर्थकलस्थाने हीअ इत्यादेशः)

(१) मृयते । सरति-ससर्ति । वरति । सानुबन्धकयोः वृणोति-वृणुते । वृणीते ।

(२) करोति-कुरुते । (३) जम्भते-जृम्भते । (४) गृह्णाति-गृह्णीते । (५) गृहीत्वा गृहीतुम् । गृहीतव्यम् ।

का हिइ (७-१२ मवि० धातोः परः हिर्भवति ७-१ ति=इ) काऊण (४-२३ क्त्वा=ऊण) काउं (२-२ तलोपः ४-१२ मवि०) काअव्वं(१) (२-२ यलोपः-३-२ तलोपः ४-१२ मवि०) ॥ १७ ॥

## स्मरतेर्भरसुमरौ ॥ १८ ॥

स्मृ चिन्तायाम् अस्य धातोर्भर, सुमरौ भवतः भरइ । सुमरइ(२) (७-१ ति=इ शे० स्प) ॥ १८ ॥

## भियो भावीहौ ॥ १९ ॥

ञिभी भये अस्य धातोर्भा, बीहौ भवतः । भाइ, बीहइ(३)। पू० ति=इ शे० स्प०) ॥ १९ ॥

## जिघ्रतेः पापाऔ ॥ २० ॥

घ्रा गन्धग्रहणे अस्य धातोः पा, पाअ इत्यादेशौ भवतः । पाइ, पाअइ (स्प०) ॥ २० ॥

## म्लै वा वाऔ ॥ २१ ॥

म्लै हर्षक्षये अस्य धातोर्वा, वाऔ भवतः । वाइ, वाअइ(४) । (पू० स्प० ॥ २१ ॥

## तृपस्थिपः ॥ २२ ॥

तृप तृप्तौ अस्य धातोस्थिपो भवति थिंपइ(५)(पू०स्प०)॥२२॥

---

(१) चकार-चक्रे कृतम्-कृतवान्-अकर्षीत्-अकृत करिष्यति करिष्यते कृत्वा । कर्तुम् । कर्तव्यमित्यादि ।

(२) स्मरति—स्मृणोति । (३) बिभेति—बिभीते ।

(४) म्लायति । (५) तृप्यति-तृप्नोति—तृपति—तृप्यति ।

ज्ञो जाणमुणौ ॥ २३ ॥

ज्ञा अवबोधने अस्य धातोर्जाण, मुणौ भवतः । जाणइ, मुणइ(१) । ( पृ० ५५०) ॥ २३ ॥

जल्पेर्लो मः ॥ २४ ॥

जल्प व्यक्तायां वाचि अस्य धातोर्लकारस्य मकारो भवति । जम्पइ(२) ॥ २४ ॥

ष्ठाध्यागानां ठाअ झाअ गाआः ॥ २५ ॥

ष्ठा गतिनिवृत्तौ ध्यै चिन्तायां गै शब्दे एतेषां ठाअ, झाअ, गाअ इत्येत आदेशा भवन्ति । ठाअन्ति, झाअन्ति, गाअन्ति(३) ॥ २५ ॥

ठाझागाश्च वर्तमानभविष्यद्विध्याद्येकवचनेषु ॥ २६ ॥

ष्ठाध्यागानां ठा, झा, गा इत्यादेशा भवन्ति चकारात् पूर्वोक्ताश्च वर्तमानभविष्यद्विध्याद्येकवचनेषु परतः । ठाइ, ठाअइ, ठाहिइ, ठाअहिइ, ठाउ, ठाअउ । झाइ झाअइ, झाहिइ, झाअहिइ, झाउ, झाअउ । गाइ, गाअइ, गाहिइ, गाअहिइ, गाउ, गाअउ(४) ॥ २६ ॥

खादिधाव्योः खाधौ ॥ २७ ॥

खाद भक्षणे, धावु जवे एतयोर्धात्वोः खा, धा इत्यादेशौ भवतो वर्त्तमानभविष्यद्विध्याद्येकवचनेषु । खाइ (७-१ ति=इ)

(१) जानाति । (२) जल्पति । (३) तिष्ठन्ति । ध्यायन्ति । गायन्ति । इत्याद्युह्यम् ।

(४) तिष्ठति-स्थास्यति-तिष्ठतु-तिष्ठेत्-एवं ध्यै-गै इत्यादीनापि

खाहिइ (७-१२ धातोः परो हि शे० पु०) खाउ। धाइ, धाहिइ धाउ(१) (७-१८ ति=उ श० स्प०) ॥ २७ ॥

**ग्रसेर्विसः ॥ २८ ॥**

ग्रसु ग्लसु अदने अस्य धातोर्विसो भवति। विसइ(२) (७-१ ति=इ स्प०) ॥ २८ ॥

**चिञश्चिणः ॥ २९ ॥**

चिञ् चयने अस्य धातोश्चिणो भवति। चिणइ(३) (स्प०) ॥२९॥

**क्रिञः क्रिणः ॥ ३० ॥**

डुक्रीञ् द्रव्यविनिमये अस्य धातोः क्रिणो भवति। क्रिणइ(४) (इति स्प०)॥ ३० ॥

**वेः क्के च ॥ ३१ ॥**

वेरुत्तरस्य क्रीञः क्के आदेशः क्रिणादेशश्च भवति। विक्केइ, विक्किणइ (पू० स्प०) विक्रीणीते ॥ ३१ ॥

**उद्ध्म उद्धुमा ॥ ३२ ॥**

ध्मा शब्दाग्निसंयोगयोः, अस्य धातोरुत्पूर्वस्य उद्धुमा भवति। उद्धुमाइ(५) (७-१ ति=इ) ॥ ३२ ॥

---

(१) तिष्ठन्ति-ध्यायन्ति-गायन्ति।

खादधावोर्लुक् ८।४।२२८ इत्यत्र बहुलाधिकाराद्वर्तमानभविष्यद्विध्याद्येकवचन एव भवति। तेनेह न भवति। खादन्ति, धावन्ति क्वचिन्न भवति। धावइ पुरओ इति। हे०। खादति·खादिष्यति·खादतु खादेत एवं धावतीत्यादीनि। (२) ग्रसते—ग्लसते।

(३) चिनोति-चिनुते। (४) क्रीणाति-क्रीणीते।

(५) उद्धमति।

श्रदो धो दहः ॥ ३३ ॥

श्रच्छब्दादुत्तरस्य डुधाञ् धारणपोषणयोः, अस्य धातोर्दहा-देशो भवति । सद्दहइ (२-४३ श=स ३-३ रलोपः ३-१ तु-लोपः ३-५० दद्वि० ७-१ त इ) सद्दहिअं(१) (सद्दहेति पूर्ववत् ७-३२ अ=इ २-२ तलोपः ५-३० सोर्बि०) ॥ ३३ ॥

अवाद् गाहेर्वाहः ॥ ३४ ॥

गाहू विलोडने, अस्य धातोरवादुत्तरस्य वाहादेशो भवति । ओवाहइ(२) (४-२१अव=ओ ७-१ ति=इ शे०स्प०) (पक्षे(३)) अववाहइ (प्रायो ग्रहणात् २-२ वलोपो न शे०स्प०) ॥ ३४ ॥

कासेर्वासः ॥ ३५ ॥

अवादित्यनुवर्त्तते । कासृ शब्दकुत्सायाम् , अस्य धातोर-वादुत्तरस्य वासो भवति । ओवासइ, अववासइ(४) (४-२१अव= ओ शे० पू० स्प०) ॥ ३५ ॥

निरो माङोमाणः ॥ ३६ ॥

माङ् माने, अस्य धातोर्निरुत्तरस्य माणादेशो भवति । णि-म्माणइ(५) (३-३ लोप ३-५० मद्वि० शे० पू०) ॥ ३६ ॥

क्षियो झिज्जः ॥ ३७ ॥

क्षि क्षये, अस्य धातोर्झिज्जो भवति । झिज्जइ(६)(स्पष्टं) ॥३७॥

भिदिच्छिदोरन्त्यस्य न्दः ॥ ३८ ॥

---

( १ ) श्रद्धत्ते । श्रद्धितम् । ( २ ) अवगाहते ।
( ३ ) आत्वाऽभावपक्ष इत्यर्थः । ( ४ ) अवकासते ।
( ५ ) निर्मिमीते । ( ६ ) क्षिणोति, क्षयति ।

भिदिर्(१), छिदिर्(२) एतयोरन्त्यस्य न्दो भवति। भिन्दइ। छिन्दइ(३) (४-१७ वर्गान्त ७-१ ति=इ)॥ ३८॥

क्वथेर्ढः॥ ३९॥

क्वथ निष्पाके, अस्य धातोरन्त्यस्य ढो भवति। कढइ(४) (पू० सू०)॥ ३९॥

वेष्टेश्च(५)॥ ४०॥

वेष्ट् वेष्टने, अस्य धातोरन्त्यस्य ढो भवति। वेढ्ढइ(६) (ष्ट्=ढ आदेशत्वात् ढद्वि० ३-५१ ढ्=ड् ७-१ ति=इ)। योगविभाग उत्तरार्थः॥ ४०॥

उत्समोर्लः॥ ४१॥

उत्सम्भ्यामुत्तरस्य वेष्टेरन्त्यस्य ळो भवति। उव्वेल्लइ, संवेल्लइ(७) (३-१ तलोपः ३-५० वद्वि० ष्ट=ळ, आदेशत्वात् ३-५० ळद्वि० शे० पू०॥ ४१॥

रुदेर्वः॥ ४२॥

रुदिर् अस्य धातोरन्त्यस्य वो भवति। रुवइ(८) इरित् दु=व ७-१ ति=इ)॥ ४२॥

उदो विजः॥ ४३॥

उत्पूर्वस्य विजेरन्त्यस्य वकारो भवति उव्विवइ(९) (२-२

---

(१) पूर्वापरशैलीदर्शनात् (विदारणे) इत्यर्थनिर्देशो लेखकभ्रमात्त्रुटितः स्याद् इति प्रतीयते। (२) अत्रापि (छेदने) इत्युचितः।

(३) भिनत्ति, भिन्ते। छिनत्ति, छिन्ते। (४) क्वथति,।

(५) क्वचित् चकारात् ठो भवति टश्च। वेढइ, वेठइ, वेटइ इत्युदाहरणानि इत्यधिकः।

(६) वेष्टते। (७) उद्वेष्टते। (८) रोदिति। (९) उद्विजते।

तलोपः ३–५० वद्धि० शे० पू० स्प०) ॥ ४३ ॥

वृधेर्ढः ॥ ४४ ॥

वृधु वेधने अस्य धातोरन्त्यस्य ढो भवति । वड्ढइ(१)(१–२७ ऋ=अ (ध्=ढ) तस्य आदेशत्वात् ३–५० द्वि० शे० पू० ॥४४॥

हन्तेर्म्मः ॥ ४५ ॥

हन्तेरन्त्यस्य म्मो भवति । हम्मइ(२) (स्पष्टम्) ॥ ४५ ॥

रुषादीनां दीर्घता ॥ ४६ ॥

रुषादीनां दीर्घता भवति । रूसइ । तूसइ । सूसइ (२–४३ ष=स एवं सर्वत्र शे० स्प० पू०) । रुष्यति, तुष्यति, शुष्यति ॥४६॥

च्चो व्रजनृत्योः ॥ ४७ ॥

व्रज, नृती, अनयोरन्त्यस्य च्चो भवति । वच्चइ(३) (३–३ रलोपः शे० पू०) णच्चइ(४) (१–२७ ऋ=अ २–४२ न=ण् शे० स्प० ति=इ पू०) ॥ ४७ ॥

युधिबुध्योर्ज्झः ॥ ४८ ॥

युध सम्प्रहारे, बुध अवगाहने, अनयोरन्त्यस्य ज्झो भवति । जुज्झइ । बुज्झइ(५) (ध्=झ्, आदेशत्वात् ३–५० झद्वि० ३–५१ झ्=ज् शे० स्प० ॥ ४८ ॥

रुधेर्न्धम्भौ(६) ॥ ४९ ॥

रुधिर् [अस्य(७) धातो] रन्त्यस्य न्धुम्भौ भवतः । रुन्धइ,

(१) वर्द्धते । (२) हन्ति । (३) व्रजति ।

(४) नृत्यति । (५) युध्यते, बुध्यते । (६) रुधेर्न्धस्सौ=लस्सइ । का० पा० । (७) [ ] अयं पाठो न लभ्यते ।

रुम्भइ(१)(इरित् धू=पर्यायेण न्ध, म्भ-७-१ ति=इ ४-१७ वर्गान्त०) ॥ ४९ ॥

मृदो लः ॥ ५० ॥

मृद क्षालने, अस्य धातोरन्त्यस्य लो भवति । मलइ(२) (स्पष्टं) ॥ ५० ॥

शदॢपत्योर्डः ॥ ५१ ॥

शदॢ शातने, पत्ॢ पतने, अनयोरन्त्यस्य डो भवति । सडइ(३) । पडइ ( शे० स्प० ) ॥ ५१ ॥

शकादीनां द्वित्वम् ॥ ५२ ॥

शक्ॢ शक्तौ, इत्येवमादीनां द्वित्वं भवति । सक्कइ । (७-१ ति=इ स्पष्टं) लग्गइ । (७-१ ति=इ शे० स्प०) शक्नोति । लगति ॥ ५२ ॥

स्फुटिचल्योर्वा ॥ ५३ ॥

स्फुटविकसने, चल कम्पने, अनयोरन्त्यस्य वा द्वित्वं भवति फुट्टइ, (३-१ सलोपः, टाद्वि० ७-१ ति=इ) फुडइ (द्वित्वाभावे २-२० ट=ड शे० पू०) चल्लइ, चलइ(४) ॥ ५३ ॥

प्रादेर्मीलः ॥ ५४ ॥

प्रादेरुत्तरस्य द्वित्वं भवति वा । पमिल्लइ(५) (स्प० पू०) पमीलइ (३-३ रलोपः ह्रस्वः संयोगे इति हेमसूत्रात् मी=मि शे० पू०) (स्प०) ॥ ५४ ॥

---

(१) रुणद्धि, रुन्धे । (२) मृद्नाति । (३) शीयते । पतति ।
(४) स्फोटते, स्फुटति । चलति । (५) प्रमीलति ।

मुजादीनां क्त्वातुमुन्तव्येषु लोपः ॥ ५५ ॥

भुज इत्येवमादीनां क्त्वातुमुन्तव्येषु परतोन्त्यस्य लोपो भवति भोत्तूण (जलोपे ३-१ कलोपे गुणे(१) ३-५० तद्वि० ४-२३ क्त्वः शेषस्य वस्य स्थाने ऊणादेशः) भोत्तुं, भोत्तव्वं । विदः, वेत्तूण (दलोपे ३-१ कलोप ३-५० तद्वि० ४-२३ वा=ऊण, गुणः पूर्ववत्) वेत्तुं (पूर्ववद् गुणे कृते जलोपे च शेषभूत तुमनस्त कारस्य ३-५० द्वि० ४-१२ मवि०) वेत्तव्वं (३-२ यलोपः ३-५० वद्वि० ४-१२ मवि०) । रुदः, रोत्तूण, रोत्तुं (भोत्तुं-भोत्तव्यं वत्) रोत्तव्वं (भोत्तसावात्) ॥ ५५ ॥

श्रुहुजिलूधुवां णोऽन्त्ये ह्रस्वः(२) ॥ ५६ ॥

श्रु श्रवणे, हु दानादाने(३), जि जये, लूञ् छेदने(४), धूञ् कम्पने, इत्येतेषामन्ते णः प्रयोक्तव्यः दीर्घस्य ह्रस्वो भवति । सुणइ । (२-४३ श्=स ३-३ रलोपः ७-१ ति=इ शे०स्प०) हुणइ । जिणइ । लुणइ । धुणइ(५) (स्पष्टाः पू०) ॥ ५६ ॥

---

(१) युवर्णस्य गुणः । ८ । ४ । २३७ हेम सूत्रेण गुणः । एवमुत्तरत्र । वस्तुतस्तु-"रुद-भुज-मुचां तोऽन्त्यस्य" ८ । ४ । २१२-एषामन्त्यस्य क्त्वा, तुम्, तव्येषु तो भवति । एषः प्रकारः शोभनः प्रतिभाति क्त ऊणः इति क्त्वा=ऊण, पुनस्तकारस्य द्वित्वादि सर्वं सुघटमिति । रोदितुम्-रोदितव्यम् ।

( २ ) श्रु हुजि मुधुञां णो ह्रस्वश्च । का० पा० ।

( ३ ) हुदानादनयोः । का० पा० ।

( ४ ) मुङ् शब्दे इत्यधिकः मुणइ-मवते । का० पा० ।

( ५ ) शृणोति । जुहोति । जयति । लुनाति । लुनीते धुनोति । धवते । इत्यादयः ।

भावकर्मणोर्व्वश्च ॥ ५७ ॥

एषां भावकर्मणोरन्त्ये व्व शब्दः प्रयोक्तव्यः चकारात् ण· श्च । सुव्वइ, ( २-४३ श्=स ३-३ रलोपः व्वप्रयोगे संयोगे ८ । ८ । २२७ हेम० सू० ह्रस्व० ७-१ ति=इ ) सुणिज्जइ ( ८-५६ णत्वे ह्रस्वे च कृते ७-३३ अ=इ, इति सुण=इ=सुणिजाते ७-२१ धातु प्रत्यययोर्मध्ये ज्ज ७-१ त=इ) । हुव्वइ, हुणिज्जइ । जिव्वइ, जिणिज्जइः । लुव्वइ, लुणिज्जइ । धुव्वइ, धुणिज्जइ(१) पूर्ववत् सर्वेषां सि· द्धिर्ज्ञेया) ॥ ५७ ॥

गमादीनां द्वित्वं वा ॥ ५८ ॥

गमादीनां धातूनां द्वित्वं वा भवति । गम्मइ, (स्पष्टं) गमि· ज्जइ ।)७-३३ भविष्यति गमोऽकारस्येत्वं ७-२१ मध्ये ज्ज ७-१ त=इ एवमुत्तरत्रापि ज्ञेयम्) रम्मइ, इमिज्जइ । हस्सइ, हसिज्ज· इ । गम्यते रम्यते हस्यते ॥ ५८ ॥

लिहेर्लिज्झः(२) ॥ ५९ ॥

लिह आस्वादने अस्य धातोर्लिज्झो भवति भावकर्मणोः । लिज्झइ(३) (स्प० ७-१ सू० त=इ) ॥ ५९ ॥

हृकोर्हीरकीरौ ॥ ६० ॥

हृञ् हरणे, डुकृञ् करणे अनयोर्हीरकीरौ भवतः भावकर्म·

---

( १ ) श्रूयते-हूयते-जीयते-लूयते, धूयते ।

( २ ) लिहेर्ज्जः-लिज्जइ । का० पा० । ( ३ ) लिह्यते ।

णोरर्थयोः । हीरइ । कीरइ(१) (स्प० पू०) ॥ ६० ॥

ग्रहेर्दीर्घो वा(२) ॥ ६१ ॥

ग्रहेर्धातोर्दीर्घो वा भवति भावकर्मणोरर्थयोः गाहिज्जइ, गहिज्जइ(३) (३-४ रलोप विकल्पेन दीर्घे कृते अग्रे गमिज्जइवत् ) ॥ ६१ ॥

क्तेन दिण्णादयः(४) ॥ ६२ ॥

दिण्ण, इत्येवमादयः क्तप्रत्ययेन सह निपात्यन्ते । डुदाञ् दाने, दिण्णं । (स्प०) रुदिर्, रुण्णं । (पूर्व० स्प०) त्रसी(५), हित्थं(६) । (स्प०) दह, दड्ढं(७) । रञ्जि, रत्तं(८) । (पू० स्प०) ॥ ६२ ॥

खिदेर्विसूरः ॥ ६३ ॥

खिद दैन्ये, अस्य विसूरो भवति । विसूरइ । ( स्पष्टं अत्रोदाहरणभूते प्राकृतपद्यखण्डे 'विरहेण, बाळा, इत्येतौ शब्दौ संस्कृते प्राकृतसमौ शेषो महिळावत् ) विरहेण

---

( १ ) ह्रियते–क्रियते ॥ क्वचित् "ज्ञो णज्जणवौ वा" ज्ञाइत्यस्य धातोः णज्ज, णव इत्यादेशौ भवतः भावकर्मणोः । णज्जइ । णवइ । पक्षे जाणिज्जइ–मुणिज्जइ । ज्ञानृत्योर्णज्जणट्टौ । अनयोर्भावे णज्ज णट्टौ भवतः । णज्जइ । णट्टइ । ज्ञायते । नृत्यते । का० पा० इत्यधिकः ।

( २ ) ग्रहेर्वा वेत्थ । वेत्थइ–गेण्हिज्जइ–गृह्यते ।

( ३ ) गृह्यते । ( ४ ) दिणादय इत्यपि–दिणं रुणं । का० पा० ।

( ५ ) त्रासि तित्थं–तत्थं । का० पा ।

( ६ ) (हित्थं व्रीडितभीतयोः) । ( ७ ) दड्ढं–इढढं–दढं । का०पा०

( ८ ) रन्तं–रतं–रज्जं । दत्तं रुदितं–त्रस्तं–दग्धं–रक्तं । का०पा०।

विसूरइ बाळा(१) ॥ ६३ ॥

क्रुधेर्जूरः(२) ॥ ६४ ॥

क्रुध कोपे, अस्य जूरो भवति। जूरइ(३) (पू० ति, त=इ शे० स्प०) ॥ ६४ ॥

चर्चेश्चम्पः ॥ ६५ ॥

चर्च अध्ययने, अस्य धातोश्चम्पो भवति । चम्पइ(४) ( स्पष्टम् ) ॥ ६५ ॥

त्रसेर्वज्जः ॥ ६६ ॥

त्रसी उद्वेगे, अस्य धातोर्वज्जो भवति । वज्जइ(५) (पू० स्प०) ॥ ६६ ॥

मृजेर्लुभसुपौ(६) ॥ ६७ ॥

मृजू शुद्धौ अस्य धातो र्लुभ, सुप इत्यादेशौ भवतः । लुभइ सुपइ (७) (स्प०) ॥ ६७ ॥

बुड्डखुप्पौ मस्जेः(८) ॥ ६८ ॥

टुमस्जो शुद्धौ अस्य धातोर्बुड्डखुप्पौ भवतः । बुड्डइ खुप्पइ(९) (पू० स्प०) ॥ ६८ ॥

दृशेः पुलअणिअक्कअवक्खाः(१०) ॥६९ ॥

---

( १ ) खिद्यति । ( २ ) क्रूट । ( ३ ) क्रुध्यति ।
( ४ ) चर्चयते । ( ५ ) त्रस्यति=त्रसति ।
( ६ ) मृजेर्जुंलबुलौ–जुलइ–बुलइ । का० पा० । ( ७ ) मार्ष्टि ।
( ८ ) बुत्त, बुत्था । बुत्तइ, व्युत्थइ । ( ९ ) मज्जति ।
( १० ) दृशेर्दीस पुलणि छणि अछावक्खाः, दीसइ, पुलइ–णिछइ, अवक्खइ । दृश्यते । का० पा० ।

दृशिर् प्रेक्षणे अस्य पुलअ, णिअक्क, अवक्ख भवन्ति । पुलअइ णिअक्कइ । अवक्खइ(१) (स्पष्टं) ॥ ६९ ॥

शकेस्तरवअतीराः ॥ ७० ॥

शक्लृ शक्तौ अस्य धातोः तर, वअ, तीर इत्येत आदेशा भवन्ति । तरइ, वरइ, तीरइ(२) ॥ ७० ॥

शेषाणामदन्तता ॥ ७१ ॥

शेषाणां लुप्तानुबन्धानामदन्तता भवति । भमइ चुम्बइ(३)।७१।

[(४)एवमन्येऽपि क्रियाशब्दादेशाः ज्ञेया यथा मृजेः जामइ पिबतेः पाढइ] ।

इति भामहविरचिते प्राकृतप्रकाशे धात्वादेशपरिच्छेदोऽष्टमः(५)॥

---

( १ ) पश्यति । ( २ ) शक्नोति ।

( ३ ) भ्रमति । चुम्बति । ( ४ ) [ ]अयं पाठो न सार्वत्रिकः ।

( ५ ) अत्र प्रकरणान्ते ग्रन्थान्तरेभ्य आवश्यकतया धातुविहित-प्रत्ययादेशा धात्वादेशाश्चोल्लिख्यन्ते संक्षेपेण तत्र पूर्वं धातुविहितप्रत्ययाऽऽदेशाः—

सिनास्तेः सिः । ८ । ३ । १४६ ।

सिना द्वितीयत्रिकादेशेन सह अस्तेः सिरादेशो भवति ॥ निठुरो जंसि । सिनेति किम् । से आदेशे सति अत्थि तुमं ।

गुर्वादेरविर्वा । ८ । ३ । १५० ।

गुर्वादेर्णेः स्थाने अवि इत्यादेशो वा भवति । शोषितम् । सोसविअं । सोसिअं । तोषितम् । तोसविअं । तोसिअं ।

भ्रमेराडो वा । ८ । ३ । १५१ ।

भ्रमेः परस्य णे राड आदेशो वा भवति ॥ भमाडेइ । पक्षे भामेइ । भमावइ । भमावेइ । ( भ्रमयति ) ।

दु सु मु विध्यादिष्वेकस्मिंस्त्रयाणाम् । ८ । ३ । १७३ ।

विध्यादिष्वर्थेषूत्पन्नानामेकत्वेऽर्थे वर्तमानानां त्रयाणामपि त्रिकाणां स्थाने यथासंख्यं दु, सु,-मु, इत्येते आदेशा भवन्ति ॥ हसउ सा । हससु तुमं । हसामु अहं । दकारोच्चारणं भाषान्तरार्थम् ।

सोर्हिर्वा । ८ । ३ । १७४ ।

पूर्वसूत्रविहितस्य सोः स्थाने हिरादेशो वा भवति । देहि । देसु

अत इज्जस्विज्जहीज्जे-लुको वा । ८ । ३ । १७५ ।

अकारात्परस्य सोः , इज्जसु, इज्जहि, इज्जे इत्येते लुक् च आदेशा वा भवन्ति । हसेज्जसु । हसेज्जहि । हसेज्जे । हस । पक्षे हससु । अत इति किम् । होसु ।

क्रियातिपत्तेः । ८ । ३ । १७९ ।

क्रियातिपत्तेः स्थाने ज्ज, ज्जावादेशौ भवतः । होज्ज, होज्जा । अभविष्यदित्यर्थः । जइ होज्ज वण्णाणिज्जो ।

न्त-माणौ । ८ । ३ । ८० ।

क्रियातिपत्तेः स्थाने न्त, माणौ आदेशौ भवतः । होन्तो । होमाणो । अभविष्यदित्यर्थः ।

क्यङोर्य लुक् । ८ । ३ । १३८ ।

क्यङन्तस्य क्यजन्तस्य वा सम्बन्धिनो यस्य लुग् भवति । गरुआइ गरुआअइ । अगुरुर्गुरुर्भवति । गुरुरिवाचरतिवेत्यर्थः । क्यच । लोहिआइ । लोहिआअइ ।

क्ते । ८ । ३ । १५६ ।

क्ते परत अत इत्वं भवति । हसिअं । पढिअं ।

अदेल्लुक्यादेरत आः । ८ । ३ । १५३ ।

णेरदेल्लोपेषु कृतेषु आदेरकारस्य आ भवति । अति, पाडइ । मारइ । एति कारेइ । खामेइ । लुकि, कारिअं । खामिअं । कारीअइ । खामीअइ । कारिज्जइ । खामिज्जइ । अदेल्लुकीति किम् । कराविज्जइ । करावीअइ । आदेरिति किम् । संगामेइ । इहव्यवहितस्य मा भूत् । कारिअं । इहान्त्यस्य मा भूत् । अत इति किम् । दूसेइ । केचित्तु आवे

आव्यादेशयोरस्यादेरत आत्वमिच्छन्ति । कारावेइ । दासाविओ जणो सामलीइ ।

णेरदेदावावे । ८ । ३ । १४९ ।

णेः स्थाने अत्, एत्, आव, आवे एते चत्वार आदेशा भवन्ति । दरिसइ । कारेइ । करावइ । करावेइ । हासेइ । हसावइ । हसावेइ । बहुलाधिकारात् । क्वचिदेन्नास्ति । जाणावेइ । क्वचिद् आवे नास्ति । पाएइ । भावेइ ।

दृशिवचेर्डीस-डुच्चं । ८ । ३ । १६१ ।

दृशेर्वचेश्च परस्य क्यस्य स्थाने यथासंख्यं डीस डुच्च इत्यादेशौ भवतः । ईअ इज्जापवादः । दीसइ । वुच्चइ ।

सी-ही-हीअ भूतार्थस्य । ८ । ३ । १६२ ॥

भूतेर्थे विहितोऽद्यतनादिः प्रत्ययो भूतार्थः । तस्य स्थाने-सी-ही-हीअ एत्यादेशा भवन्ति । उत्तरत्र व्यञ्जनादीअ(१) विधानात्स्वरान्तादेवायं विधिः । कासी । काही । काहीअ । अकार्षीत् । अकरोत् । चकारवेत्यर्थः । एवं ठासी । ठाही । ठाहीअ ।

कृदो हं । ८ । ३ । १७० ।

करोते र्ददातेश्च परो भविष्यति विहितस्य स्यादेशस्य स्थाने हं वा प्रयोक्तव्यः । काहं । दाहं । करिष्यामि । दास्यामीत्यर्थः । पक्षे काहिमि । दाहिमि । इत्यादि ।

अधुना धात्वादेशाः प्रदर्श्यन्ते-

भुवेर्हो-हुव-हवाः । ८ । ४ । ६० ।

भुवोधातोर्हो, हुव, हव इत्येते आदेशा वा भवन्ति(२) । होइ ।

---

(१) "व्यञ्जनादीअ" इत्यनेन-हुवीअ । (अभूत्-अभवत्-बभूव) । अच्छीअ । (आसिष्ट आस्त-आसां चक्रे) इत्यादिषु व्यञ्जनान्ता दीअ विधानं वेदितव्यम् । प्राकृतप्रकाशे चैतद् ७-२३ सूत्रे स्पष्टम् ।

(२) 'भवतेर्हो, हुवौ स्याताम्' इति प्राकृतसर्वस्वम् ।

होन्ति । हुवइ । हुवन्ति । हवइ । हवन्ति । पक्षे भवइ । परिहीण विहवो । क्वचिदन्यदपि । उब्भुअइ । भत्तं । भुत्तं ।

अविति हुः । ८ । ४ । ६१ ॥

विद्वर्जे प्रत्यये भुवो हु इत्यादेशो वा भवति । हुन्ति । भवन् (भुवन्) हुन्तो । अवितीति किम् । होइ ।

पृथक् स्पष्टे णिव्वडः । ८ । ४ । ६२ ॥

पृथक् भूते स्पष्टे च कर्तरि भुवो णिव्वड इत्यादेशो भवति । णिव्वडइ । पृथक् स्पष्टो वा भवतीत्यर्थः ।

प्रभौ हुप्पो वा । ८ । ४ । ६३ ॥

प्रभुकर्तृकस्य भुवो हुप्प इत्यादेशो वा भवति । प्रभुत्वं च प्रपूर्वस्यैवार्थः । अङ्गेच्चिअ न पहुप्पइ । पक्षे पभवेइ ।

सम्भावे रासङ्कः ॥ ३५ ॥ आसङ्कइ । सम्भावइ ।

कथेर्वज्जर-पज्जर-उप्पाल-पिसुण-सङ्घ-बोल्ल—चव—जम्प-सीस-साहाः ॥ ८ । २ ॥

वज्जरइ । पज्जरइ । उप्पालइ । पिसुणइ । सङ्घइ । बोल्लइ । चवइ । जम्पइ । सीसइ । साहइ । पक्षे कहइ । एते चाऽन्यैर्देशीषु पठिता अपि अत्र धात्वादेशीकृता विविधेषु प्रत्ययेषु प्रतिष्ठन्तामिति-तथाच-वज्जरिओ, कथितः । वज्जरिऊण, कथयित्वा । वज्जरणं, कथनम् । वज्जरन्तो कथयन् । वज्जरिअव्वं, कथयितव्यम् । इति रूपसहस्राणि सिद्ध्यन्ति । संस्कृतधातुवच्च प्रत्ययलोपागमादिविधिः (१)

दुःखे णिव्वरः ॥ ३ ॥ णिव्वरइ । दुःखं कथयतीत्यर्थः ।

जुगुप्सेर्झुण-दुगुच्छ-दुगुञ्छाः ॥ ४ ॥ झुणइ । दुगुच्छइ । दुगुञ्छइ । पक्षे जुगुच्छइ । गलोपे दुउच्छइ दुउञ्छइ । जुउच्छइ ।

बुभुक्षि-वीज्योर्णीरव-वोज्जौ ॥ ५ ॥ बुभुक्षेराचारक्विबन्तस्य च

१ ) 'शवादीनां च प्रायः प्रयोगो नास्ति' इति हेमः ।

वीजेः ॥ णीरवइ । बुभुक्खइ । वोज्जइ । वीजइ ॥

उदो ध्मो धुमा ॥ ८ ॥ उधुमाइ ।

श्रदो धो दहः ॥ ९ ॥ सद्दहइ । सद्दहमाणो जीवो ।

पिबेः पिज्ज-डल्ल-पट्ट घोट्टाः ॥ १० ॥ पिज्जइ । डल्लइ । पट्टइ । घोट्टइ । पक्षे पिअइ ।

उद्वातेरोरुम्मा वसुआ ॥ ११ ॥ ओरुम्माइ । वसुआइ । उव्वाइ ।

निद्राते रोहीरोङ्घौ ॥ १२ ॥ ओहीरइ । उङ्घइ । निद्दाइ ।

आघ्रे राइग्घः ॥ १३ ॥ आइग्घइ । अग्घाइ । आजिघ्रतीत्यर्थः ।

स्नाते रभुत्तः ॥ १४ ॥ अभुत्तइ । ण्हाइ ।

समः स्त्यः खाः ॥ १५ ॥ सङ्खाइ ।

स्थष्ठा-थक्क-चिट्ठ निरप्पाः ॥ १६ ॥

ठाइ । ठाअइ । ठाणं । पट्ठिओ । उट्ठिओ । पट्ठाविओ । उट्ठाविओ । थक्कइ । चिट्ठइ । चिट्ठिऊण । निरप्पइ । बहुलाधिकारात्क्वचिन्न भवति । थिअ । थाणं । पत्थिओ । उत्थिओ । थाऊण ।

उदष्ठ-कुक्कुरौ ॥ १७ ॥ उट्ठइ । उक्कुक्कुरइ ।

म्लेर्वा-पव्वायौ ॥ १८ ॥ वाइ । पव्वायइ । मिलाइ । म्लायत इत्यर्थः ॥

निर्मो निम्माण-निम्मावौ ॥ १९ ॥ निम्माणइ । निम्मवइ ।

क्षेर्णिज्झरोवा ॥ २० ॥ णिज्झरइ । पक्षे झिज्जइ ।

छदेर्णेर्णुम-नूम-सन्नुम-ढक्कौम्बाल-पव्वालाः ॥ २१ ॥ णुमइ । नूमइ । णत्वे । णूमइ । ढक्कइ । ओम्बालइ । पव्वालइ । छायइ ॥

निव्रिपत्योर्णिहोडः ॥ २२ ॥ निवृञः पतेश्च ण्यन्तस्य । णिहोडइ । पक्षे । निवारेइ । पाडेइ ॥

धवलेर्दुमः ॥ २४ ॥

ण्यन्तस्य । दुमइ । धवलइ । दीर्घत्वमपि(१) । दूमिअं । धवलितमित्यर्थः ॥

---

( १ ) 'स्वराणां स्वराः' इति बाहुलकाद् इति भावः ॥

तुलेरोहामः ॥ २५ ॥ ण्यन्तस्य । ओहामइ । तुलइ ॥

मिश्रेर्वीसाल-मेलवौ ॥ २८ ॥ ण्यन्तस्य । वीसालइ । मेलवइ । मिस्सइ ॥

भ्रमेस्तालिअण्ठ-तमाडौ ॥ ३० ॥ ण्यन्तस्य । तालिअण्टइ । तमाडइ । भामेइ । भमाडेइ । भमावेइ ॥

दृशेर्दाव-दंस-दक्खवाः ॥ ३२ ॥ ण्यन्तस्य । दावइ । दंसइ । दक्खवइ । दरिसइ ॥

स्पृहः सिहः ॥ ३४ ॥ ण्यन्तस्य । सिहइ ।

यापेर्जवः ॥ ४० ॥ जवइ । जावेइ ॥

प्लावेरोम्वालपव्वालौ ॥ ४१ ॥ ण्यन्तस्य ओम्वालइ । पव्वालइ । पावेइ ।

विकोशेः पक्खोडः ॥ ४२ ॥ ण्यन्तस्य । पक्खोडइ । विकोसइ ।

रोमन्थे रोग्गाल वग्गोलौ ॥ ४३ ॥ नामधातोर्ण्यन्तस्य । ओग्गालइ । वग्गोलइ । रोमन्थइ ।

दोले रङ्खोलः ॥ ४८ ॥ स्वार्थे ण्यन्तस्य । रङ्खोलइ । दोलइ ।

वेष्टेः परिआलः ॥ ५१ ॥ ण्यन्तस्य । परिआलेइ । वेढइ ।

क्रियः किणो वेस्तु क्के च ॥ ५२ ॥ किणइ । विक्केइ । विक्किणइ ।

भियो भा-वीहौ ॥ ५३ ॥ भाइ । भाइअं । वीहइ । वीहिअं । बहुलाधिकारात् । भीओ ।

आलीङोऽल्ली ॥ ५४ ॥ अल्लियइ । ( अल्लीअइ ) अल्लीणो ।

निलीङेर्णिलीअणिलुक्कणिरिग्घलुक्कलिक्कलिहक्काः ॥ ५५ ॥

णिलीअइ । णिलुक्कइ । णिरिग्घइ । लुक्कइ । लिक्कइ । लिहक्कइ । निलिज्जइ । (णिलिज्जइ)

विलीङेर्विरा ॥ ५६ ॥ विराइ । विलिज्जइ ।

रुतेरुञ्ज-रुण्टौ ॥ ५७ ॥ रौतेः । रुञ्जइ । रुण्टइ । रवइ ।

श्रुटेर्हणः ॥ ५८ ॥ हणइ । सुणइ ।

धूञेर्धुवः ॥ ५९ ॥ धुवइ । धुणइ ।

काणेक्षिते णिआरः ॥ ६६ ॥ काणेक्षित विषयस्य कृञो णिआर इत्यादेशो वा भवति । णिआरइ । काणेक्षितं करोति ।

कृञः कुणः ॥ ६७ ॥ कुणइ । करइ ।

श्रमे वावम्फः ॥ ६८ ॥ वावम्फइ । श्रमं करोति ।

मन्युनौष्ठमालिन्ये णिव्वोलः ॥ ६९ ॥ णिव्वोलइ । मन्युना ओष्ठं मलिन करोति ।

शैथिल्यलम्बने पयल्लः ॥ ७० ॥ पयल्लइ । शिथिली भवति । लम्बते वा ।

क्षुरे कम्मः ॥ ७२ ॥ कम्मइ । क्षुरं करोतीत्यर्थः ।

चाटौ गुललः ॥ ७३ ॥ गुललइ । चाटु करोतीत्यर्थः । निष्पतनविषयस्य तु णीलुञ्छइ ।

स्मरेर्झरझूरभललढविम्हरसुमरपयरपम्हुहाः ॥ ७४ ॥

झरइ । झूरइ । भरइ । भलइ । लढइ । विम्हरइ । सुमरइ । पयरइ । पम्हुहइ । सरइ ॥ विपूर्वकस्य तु पम्हुसइ । विम्हरइ । वीसरइ ॥

व्याहृञः कोक्कपोक्कौ ॥ ७६ ॥ कोक्कइ । ह्रस्वत्वे तु कुक्कइ । पोक्कइ । पक्षे वाहरइ ॥

प्रसरेः पयल्लोवेल्लौ ॥ ७७ ॥ पयल्लइ । उवेल्लइ । पसरइ । गन्धविषये तु महमहइ मालई । मालई गन्धो पसरइ ।

जागर्तेर्जग्गः ॥ ८० ॥ जग्गइ । पक्षे । जागरइ ॥

व्याप्रेराअड्डः ॥ ८१ ॥ आअड्डइ । वावरेइ ॥

आदृङः सन्नामः ॥ ८३ ॥ सन्नामइ । आदरइ ॥ अवतरतेस्तु ओहइ । ओरसइ । ओअरइ ।

पचेः सोल्ल पउल्लौ ॥ ९० ॥ सोल्लइ । पउल्लइ । पयइ ॥ मुचेश्च–छड्डइ । अवहेडइ । मेल्लइ । उस्सिक्कइ । रेअवइ । णिलुञ्छइ । धंसाडइ । पक्षे । मुअइ ॥

दुःखेः णिव्वलः ॥९२॥ णिव्वलेइ । दुःखं मुञ्चतीत्यर्थः ॥ वञ्चेस्तु–वेहवइ । वेलवइ जूरवइ । उमच्छइ । वञ्चइ ॥ सिञ्चेश्च–सिञ्चइ । सिम्पइ । सेअइ ॥

गर्जेर्बुक्कः ॥ ९८ ॥ बुक्कइ । गज्जइ ।

वृषेर्ढिक्कः ॥ ९९ ॥ ढिक्कइ । वृषभो गर्जतीत्यर्थः ।

राजेरग्घ-छज्ज-सह-रीर-रेहाः ॥ १०० ॥ अग्घइ इत्यादि ॥

मस्जेराउड्ड-णिउड्ड-बुड्ड-खुप्पाः ॥ १०१ ॥ आउड्डइ । इत्यादि । पक्षे । मज्जइ ॥

पुञ्जेरारोलवमालौ ॥ १०२ ॥ आरोलइ । इत्यादि ।

तिजेरोसुक्कः ॥ १०४ ॥ ओसुक्कइ ॥

मृजेरुग्घुस-लुञ्छ-पुञ्छ—पुंस-फुस-पुस—लुह—हुल—रोसाणाः ॥ १०५ ॥ उग्घुसइ । इत्यादि । पक्षे । मज्जइ ।

भञ्जेर्वेमय-मसुमूर-मूर-सूर-सूड-विर-पविरञ्ज-करञ्ज—नीरञाः ॥ १०६ ॥ वेमयइ इत्यादि पक्षे-भञ्जइ । अनुव्रजेस्तु पडिअग्गइ । अणुवच्चइ ॥

युजो युञ्ज-जुज्ज-जप्पाः ॥ १०९ ॥ जुञ्जइ । इत्यादि ॥

भुजो भुञ्ज-जिम-जेम-कम्माण्ह-समाण-चमढ-चड्डाः ॥ ११० ॥ भुञ्जइ । इत्यादि ॥ उपेनयुक्तस्य तु कम्मवइ । उवहुञ्जइ ॥ घटेः : गढइ । घडइ । सम्पूर्वस्य तु सङ्गलइ । सङ्घडइ ॥

हासेन स्फुटेर्मुरः ॥ ११४ ॥ मुरइ । हासेन स्फुटतीत्यर्थः ॥

तुडेस्तोड-ट्टुट्ट-खुट्ट-खुड-उक्खुड-उल्लुक्क-णिलुक्क-लुक्क-उल्लूराः ॥ ११६ ॥ तोडइ इत्यादि । पक्षे तुडइ ॥

घूर्णो घुल-घोल-घुम्म-पहल्लाः ॥ ११७ ॥ घुलइ इत्यादि ॥ ग्रन्थेः—गण्ठइ । गण्ठा ॥

मन्थेर्घुसल—विरालौ ॥१२१॥ पक्षे मन्थइ ॥ ह्लादेः-अवअच्छइ । ह्लादते । ह्लादयति वा ॥ खिद्यते—जूरइ । विसूरइ । खिज्जइ ॥

नेः सदो मज्जः ॥ १२३ ॥ निपूर्वस्य सदो मज्ज इत्यादेशो भवति । अत्ता एत्थ णुमज्जइ ॥ हे० ।

छिदेर्दुहाव-णिच्छल्ल-णिज्झोड-णिव्वर-णिल्लूर-लूराः ॥१२४॥ दुहावइ । इत्यादि । पक्षे । छिन्दइ ॥ आङ्पूर्वस्य तु ओअन्दइ । उद्दालइ ॥

मृदो मल-मढ-परिहट्ट-खड्ड-चड्ड-मड्ड-पन्नाडाः ॥ १२६॥ मलइ । इत्यादि ॥ स्पन्देः-चुलुचुलइ । पन्दइ ॥ विसंवदेः-विअट्टइ । विलोट्टइ । फंसइ । विसंवयइ ॥ शीयतेः-झडइ । पक्खोडइ ॥ आक्रन्देः णीअहरइ । अक्कन्दइ ॥ खिद्यतेः-जूरइ । विसूरइ । खिज्जइ ॥

रुधेरुत्थङ्घः ॥ १३३ ॥ उत्थङ्घइ । रुन्धइ ॥ निषेधतेः-हक्कइ । निसेहइ ॥ ननेः-तडइ । तड्डुइ । तड्डुवइ । विरल्लइ । तणइ । उपसर्पेः-अल्लिअइ । उपसप्पइ ॥

सन्तपेर्झङ्खः ॥१४०॥ झङ्खइ । पक्षे । सन्तप्पइ । ओअग्गइ । वावेइ । व्याप्नोतीत्यर्थः ॥

क्षिपेर्गलत्थ—अड्डक्ख—सोल्ल-पेल्ल—णोल्ल-छुह—हुल-परी-घत्ताः ॥ १४३ ॥ गलत्थइ । परीइ । इत्यादि । पक्षे । खिवइ ॥

उत्क्षिपेर्गुलगुञ्छ—उत्थङ्घ—अल्लत्थ—अब्भुत्त-उस्सिक्क—हक्खुवाः ॥ १४४ ॥ आक्षिपेर्णीरवः-णीरवइ । अक्खिवइ ॥

स्वपेः कमवस-लिस-लोट्टाः ॥ १४६ ॥ पक्षे सुअइ ॥ वेपेः—आयम्बइ । आयज्झइ । वेवइ ॥ विलपेर्झङ्ख-वडवडौ ॥ १४८ ॥ पक्षे विलवइ ॥ कृपेः-अवहावेइ । कृपां करोतीत्यर्थः ॥

प्रदीपेस्तेअव-सन्दुम-सन्धुक्क-अब्भुत्ताः ॥ १५२ ॥ तेअवइ । इत्यादि । पक्षे । पलीवइ ॥ लुभेः-सम्भावइ । लुब्भइ ॥ क्षुभेः-खउरइ । पड्डुहइ । खुब्भइ। उपालम्भेर्झङ्ख-पच्चार-वेलवाः ॥१५६॥ पक्षे उवालम्भइ ॥ अवेर्जृम्भो जम्भा ॥ १५७ ॥ जृम्भेर्जम्भा इत्यादेशो भवति । वेस्तु न भवति । जम्भाइ । जम्भाअइ । अवेरिति किम् । केलि-पसरो विअम्भइ ॥ नमेः-णिसुढइ । भाराक्रान्तो नमतीत्यर्थः ॥ मण्डेः-चिञ्चइ । चिञ्चिअइ । चिञ्चिल्लइ । रीडइ। टिविडिक्कइ मण्डइ ॥

विश्राम्यतेः-णिव्वाइ । वीसमइ ॥ आक्रमतेः-ओहावइ । उत्थारइ । छुन्दइ । अक्कमइ ॥

भ्रमेष्टिरिटिल्ल-ढुंढुल्ल ढण्ढल्ल-चक्कम्म-भम्मड-भमड-भमाड-

तलअण्ट-झण्ट-झम्प-भुम-गुम-फुम-फुस-ढुम-ढुस-परीपराः।१६१।

भ्रमेरेतेऽष्टादशादेशा वा भवन्ति ॥ टिरिटिल्लइ । इत्यादि । पक्षे । भमइ ॥

गमेरई-अइच्छ-अणुवज्ज-अवज्जस-उक्कुस-अक्कुस-पच्चड्डु-पच्छन्द-णिम्मह-णी-णीण-णीलुक्क-पदअ-रम्भ-परिअल्ल-वोल-परिअल-णिरिणास-णिवह-अवसेह-अवहराः ॥ १६२ ॥

गमेरेते एकविंशतिरादेशा वा भवन्ति । अईइ । णीइ । इत्यादि । पक्षे गच्छइ ॥ हम्मइ । णिहम्मइ । णीहम्मइ । आहम्मइ । पहम्मइ । इत्येते तु हम्म गतावित्यस्यैव भविष्यन्ति ॥ हे० । आङ् पूर्वकस्य गमेः अहिपच्चुअइ ॥ सम्युक्तस्य-अभिमड्डइ ॥ अभ्याङ् पूर्वस्य-उम्मत्थइ । अभिमुखमागच्छतीत्यर्थः ॥ प्रत्याङ् पूर्वस्य पलोट्टइ ॥ प्रत्यागच्छतीत्यर्थः ॥ शमेः-पडिसाइ । पडिसामइ । समइ॥

रमेः संखुड्ड-खेड्ड उब्भाव-किलिकिञ्च-कोट्टुम-मोट्टाय-णीसर-वेल्लाः ॥ १६८ ॥ संखुड्डइ । इत्यादि । पक्षे रमइ ॥

पूरे-रग्घाड-अग्घव-उद्धुम-अङ्गुम-अहिरेमाः ॥ १६९ ॥ अग्घाडइ । इत्यादि । पक्षे पूरइ । पूरयतीत्यर्थः । त्वरतेः-जअडइ । इत्यधिकः ।

क्षरः खिर-झर-पज्झर-पच्चड-णिच्चल-णिट्टुआः ॥ १७३ ॥ खिरइ । इत्यादि ॥ उच्छलतेः-उत्थलइ ॥ विगलेः थिप्पइ ॥ दलेः विसट्टइ ॥ वलेः वम्फइ ॥ पक्षे । विगलइ । दलइ । वलइ ॥

भ्रंशेः फिड-फिट्ट-फुड-फुट्ट-चुक्क-भुल्लाः ॥ १७७ ॥ फिडइ । इत्यादि । पक्षे भमइ ॥

नशेर्णिरनास-णिवह-अवरोह-पडिसा-सेहावहराः ॥१७८॥ पक्षे नस्सइ ॥ संदिशतेः-अप्पाहइ । संन्दिसइ । अवात्काशः-ओवासइ ।

दृशो निअच्छ-पेच्छ-अवयच्छ-अवयज्झ-वज्ज-सव्वव-देक्ख-ओअक्ख-अवक्ख-अवअक्खइ-पुलोल (पुलोए) निअ-अव आस-पासाः॥१८१॥निअच्छइ । इत्यादि ॥ निज्झाअइ इति तु निध्यायतेः।

स्पृशः फास-फंस फरिस-छिव-छिह-आलुङ्ख आलिहाः ॥१८२॥ फासइ । इत्यादि । प्रविशेः—रिअइ । पविशइ ॥ प्रमृशतेः प्रमुष्णातेश्च-पम्हुसइ ॥

पिषेर्णिवह-णिरिणास-णिरिणज्ज-रोञ्च-चड्डाः ॥ १८५ ॥ णिवहइ । इत्यादि पक्षे पीसइ ॥ भषेः—भुक्कइ । भसइ ॥

कृषेः कड्ढ-साअड्ढ-अञ्च-अणच्छ-अयञ्छ-आइञ्छाः ॥ १८७ ॥ कड्ढइ । इत्यादि । पक्षे करिसइ । असि विषयस्य तु अक्खोडेइ (अक्खोडइ) असिं कोशात्कर्षतीत्यर्थः ।

गवेषेर्ढुण्ढुल्ल-ढण्ढोल-गमेस-घत्ताः ॥ १८९ ॥ ढुण्ढुल्लइ । इत्यादि पक्षे । गवेसइ ॥

श्लिष्यतेः—सामग्गइ । अवयासइ ॥ परिअन्तइ । सिलेसइ ॥ म्रक्षेः—चोप्पडइ । मक्खइ ॥ काङ्क्षे राह-अहिलङ्घ-अहिलङ्ख-वच्च-बम्फ—मह—सिहविलुम्पाः ( विलुम्फाः ) ॥ १९२ ॥ आहइ । इत्यादि । पक्षे ॥ कङ्खइ ॥

प्रतीक्षेः सामय—विहीर—विरमालाः ॥ १९३ ॥ सामयइ इत्यादि । पक्षे पडिक्खइ ॥

तक्षे स्तच्छ—चच्छ—रम्फाः ॥१९४॥ तच्छइ । इत्यादि । पक्षे । तक्खइ ॥ विकसेः—कोआसइ । वोसट्टइ । विअसइ ॥ हसेः-गुञ्जइ । हसइ ॥ संसः-ल्हसइ । परिल्हसइ सलिलवसणं । हे० । डिम्भइ-संसइ ॥

त्रसेर्डर-बोज्ज-वज्जाः ॥१९८॥ डरइ । इत्यादि । पक्षे । तसइ । न्यसो णिम—णुमौ ॥ १९९ ॥ णिमइ णुमइ ॥ पर्यसस्तु-पलोट्टइ । पल्लट्टइ पल्हत्थइ ॥ निश्वसेः—झङ्खइ । नीससइ ॥

उल्लसे रूसल—ऊसुम्भ—णिल्लस पुलआल—गुञ्जोल्ल-आरोआः ॥२०२॥ ऊसलइ । गुञ्जोल्लइ । ह्रस्वत्वे-गुञ्जुल्लइ । इत्यादि । पक्षे । उल्लसइ ॥ भासेः—भिसइ । भासइ ॥ ग्रसेश्च—घिसइ । गसइ । ओवाहइ । ओगाहइ । अवगाहत इत्यर्थः ॥ आरोहतेः—व-

डइ । वलग्गइ आरुहइ ॥ मुहेर्गुम्म-गुम्मडौ ॥२०७॥ पक्षे मुज्झइ ॥

दहे रहिऊल-आलुङ्खौ ॥ २०८ ॥ पक्षे डहइ ॥

ग्रहो वल-गेण्ह-हर-पङ्ग-निरुवार-अहिपच्चुआः ॥ २०९ ॥ वलइ । गेण्हइ । गिण्हइ, इत्यादि ॥

वचो वोत् ॥२११॥ क्त्वा तुमुन्तव्येषु । वोत्तूण । वोत्तुं । वोत्तव्वं ॥

दृशस्तेन ट्ठः ॥ २१३ ॥ दृशोऽन्त्यस्य तकारेण सह द्विरुक्तष्ठकारो भवति ॥ दट्ठूण । दट्ठुं । दट्ठव्वं ॥

आः कृगो(१) भूत-भविष्यतोश्च ॥ २१४ ॥ काहीअ । काहिइ । काऊण । काउं । कायव्वं ॥

छिदि—भिदोन्दः ॥ २१६ ॥ छिन्दइ । भिन्दइ ।

युध-बुध-गृध-क्रुध-सिध-मुहांज्झः ॥ २१७ ॥ जुज्झइ । बुज्झइ गिज्झइ । कुज्झइ । सिज्झइ । मुज्झइ ॥

समो ल्लः ॥ २२२ ॥ सम्पूर्वस्य वेष्टतेरन्त्यस्य द्विरुक्तो लो भवति । संवेल्लइ ॥

वोदः ॥ २२३ ॥ उदः परस्य तु वा भवति ॥ उव्वेल्लइ । उव्वेढइ ॥

उवर्णस्यावः ॥ २३३ ॥ धातोरन्त्यस्योवर्णस्य अवादेशो वा भवति ॥ हुङ् । निण्हवइ ॥ हु । निह्नवइ ॥ च्युङ् । च्यवइ ॥ रु । रवइ ॥ कु । कवइ ॥ सू । सवइ । पसवइ ॥

स्वराणां स्वराः ॥ २३८ ॥ धातुषु स्वराणां स्थाने स्वरा बहुलं भवन्ति ॥ हवइ । हिवइ ॥ चिणइ । चुणइ ॥ सद्दहणं । सद्दहाणं ॥ धावइ । धुवइ ॥ रुवइ । रोवइ ॥ क्वचिन्नित्यम । देइ । लेइ विहेइ । नासइ आर्षे वेमि ॥

व्यञ्जनाददन्ते ॥ २३९ ॥ व्यञ्जनान्ताद्धातोरन्ते अकारो भवति । भमइ । हसइ । कुणइ । चुम्बइ । भणइ । उवसमइ । पावइ । सिञ्चइ । रुन्धइ । मुसइ । हरइ करइ । शवादीनां प्रायः प्रयोगो नास्ति ॥

(१) कृञः संक्षेयम् ।

स्वरादनतो वा ॥ २४० ॥ अकारान्तवर्जितात्स्वरान्ताद्धातोरन्ते अकारागमो वा भवति ॥ पाइ । पाअइ । धाइ धाअइ ॥ जाइ । जाअइ । झाइ झाअइ ॥ जम्भाइ । जम्भाअइ ॥ उव्वाइ उव्वाअइ । मिलाइ । मिलाअइ विक्केइ । विक्केअइ ॥ होऊण । होअऊण (होइ-ऊण) अनत इति किम् । चिइच्छइ दुगुच्छइ ॥

जानातेः कर्मभावे—णव्वइ । णज्जइ । पक्षे जाणिज्जइ मुणिज्जइ ॥ णाइज्जइ ॥ नञ् पूर्वकस्य-अणाइज्जइ ॥ व्याहृञः कर्मभावे-वाहि-प्पइ । वाहरिज्जइ ॥ आरभेः कर्मणि-आढप्पइ, आढवीअइ ॥ स्निह, सिचोः कर्मणि-सिप्पइ ॥ ग्रहेः कर्मणि-घेप्पइ । गिण्हिज्जइ ॥ स्पृशेः कर्मणि-छिप्पइ । छिविज्जइ ॥

जीहइ । लज्जइ । लज्जत इत्यर्थः ॥ विरेचयतेः—ओलुण्डइ । उल्लुण्डइ । पल्हत्थइ । विरेअइ ॥ ताडयतेः—आहोडइ । विहोडइ-पक्षे-ताडेइ । उद्धूलयतेः—गुण्ठइ । उद्धूलेइ ॥ नाशयतेः-विउडइ । नासवइ । हारवइ । विप्पगालइ । पलावइ । नासइ ॥ उत्पूर्वस्य घटे-र्ण्यन्तस्य—उग्गइ । उग्घाडइ ॥ सम्भावयतेः-आसङ्घइ । सम्भावइ ॥ उत्थङ्घइ । उल्लालइ गुलगुञ्छइ । उप्पेलइ । उन्नावइ । उत्पूर्वस्य नमेर्ण्यन्तस्यैत प्रयोगाः ॥ पट्ठवइ । पेण्डवइ । पट्ठावइ । प्रस्थापयती-त्यर्थः । अर्पयतेः—अल्लिवइ । चच्चुप्पइ । पणामइ । अप्पेइ ॥ कमेः प्रयोगौ ॥ णिहुवइ-कामेइ । इति ।

प्रकाशयतेः-णुव्वइ । पयासेइ ॥ विच्छोलइ । कम्पेइ । कम्पय-तीत्यर्थः ॥ आरुहेर्ण्यन्तस्य-वलइ । आरोवेइ ॥ रञ्जेर्ण्यन्तस्य रावेइ । रञ्जेइ ॥ घटयतेः-परिवाडेइ । घडेइ ॥ रचयतेः उग्गहइ । अवहइ । विडविड्डइ । रयइ ॥ समपूर्वस्य तस्य--उवहत्थइ । सारवइ । समार-इ । केलायइ । समारयइ ॥

अफुण्णादयः शब्दाः केन सह निपात्यन्ते तद्यथा—

अफुण्णो । आक्रान्तः ॥ उक्कोसं । उत्कृष्टम् ॥ फुडं । स्पष्टम् ॥ वोलीणो । अतिक्रान्तः ॥ लुग्गो । रुग्णाः ॥ विढत्तं । वेढत्तं । अज्जि-

# अथ नवमः परिच्छेदः ।

निपाताः ॥ १ ॥

अधिकारोऽयम् । वक्ष्यमाणा निपातसंज्ञका वेदितव्याः । संस्कृतानुसारेण निपातकार्यं वक्तव्यम् ॥ १ ॥

---

तम् ॥ निमिअं । स्थापितम् ॥ चक्खिअं । आस्वादितम् । हासमणं । हर्षितम् ॥ इत्यादि ॥

धातवोऽर्थान्तरेऽपि ॥ २५९ ॥

उक्तादर्थादर्थान्तरेऽपि धातवो वर्तन्ते ॥ बलिः प्राणने पठितः, खादनेऽपि वर्तते । वलइ । खादति, प्राणनं करोति वा ॥ एवम् कालिः संख्याने, संज्ञानेऽपि । कलइ । जानाति, संख्यानं करोति । वा ॥ रिगिर्गतौ, प्रवेशेऽपि । रिगइ । ( रिग्गइ, रिंगइ ) प्रविशति, गच्छति वा । काङ्क्षतेर्वम्फ आदेशः प्राकृते । वम्फइ । अस्यार्थः । इच्छति, (पृच्छति) खादति वा । फक्कते स्थक्क आदेशः । थक्कइ । नीचां गतिं करोति, विलम्बयति वा ॥ विलप्युपालम्भ्योर्झङ्ख आ- देशः । झङ्खइ । विलपति, उपालभते, भाषते वा ॥ एवं पडिवालेइ । प्रतीक्षते, रक्षति वा केचित् कैश्चिदुपसर्गैर्नित्यम् । हरइ । युध्यते ॥ संहरइ । संवृणोति ॥ अणुहरइ । सदृशो भवति ॥ नीहरइ । पुरीषो- त्सर्गं करोति ॥ विहरइ । क्रीडति ॥ आहारइ । खादति ॥ पडिहरइ । पुनः पूरयति ॥ परिहरइ । त्यजति ॥ उवहरइ । पूजयति ॥ वाहर- इ । आह्वयति। पवसइ । देशान्तरं गच्छति । उच्चुपइ । चटति॥ उ- ल्लुहइ । निःसरति ॥ इति(१)॥ प्रयोऽत्र हेमानुसार्यादेशानामुल्लेखः॥

(१) अत्र सूत्रसंख्या हेमचन्द्राभिधस्य शब्दानुशासनस्य परिशिष्टरूपस्याऽष्टमाध्यायस्य चतुर्थपादान्तर्गतोऽवगन्तव्या ॥

हुं दानपृच्छानिर्धारणेषु ॥ २ ॥

हुं इत्ययं शब्दो दानपृच्छानिर्धारणेष्वर्थेषु निपातसंज्ञो भवति । दाने यथा, हुं गेण्ह अप्पणो जीअं । (गेण्ह ८-१५ सू० स्प० अप्पणो ५-५५ सू० स्प० जीअं २-२ । ४-५ सू० स्प० शे० सुगमं) पृच्छायाम् हुं, कधेहि साहुसु सब्भावं । (कधेहि इति १२-३ शौरसेन्यां थ=ध ७-१८ विध्यादावेकत्वे सिप्=सु-कृते(१)७-३४ ह्यादेशे सति एत्वं । मध्यमे २-२७ ध=ह् २-४३ ष्=स् । अन्त्ये ३-२ दलोपः ३-५० भद्वि० ३-५१ भ्=व् प्राय इति २-२ वलोपो न ५-३ अमोऽकारलोपः ४-१२ मवि०) निर्धारणे, हुं हुवसु तुण्हिक्को (८-१ भू=हुव ७-१८ सिप्=सु । अन्त्यः ३-५८ सू० द्रष्टव्यः ) हुं गृहाणात्मनो जीवम् । हुं कथय साधुषु सद्भावम् । हुं भव तूष्णीकः ॥ २ ॥

विअ वेअ अवधारणे(२) ॥ ३ ॥

विअ, वेअ इत्येताववधारणे निपातसंज्ञौ भवतः । एवं विअ । एवं वेअ । (एवं संस्कृतसमः शे० स्प०) एवमेव ॥ ३ ॥

ओ सूचनापश्चात्तापविकल्पेषु ॥ ४ ॥

ओ इत्ययं शब्दः सूचनापश्चात्तापविकल्पेषु निपातसंज्ञो भवति । ओ चिरआसि । ( २-२ यलोप ७-२ सि ) गाथासु द्रष्टव्यः ॥ ४ ॥

( १ ) "सोर्हिर्वा" ८ । ३ । १७४ हेम० सू० सोर्हिः ।

( २ ) विअ चेअ चिअ । हं चिअ, तुमं चिअ । अहमेव-त्वमेव । का० पा० ।

इरकिरकिला अनिश्चिताख्याने ॥ ५ ॥

इर, किर, किल इत्येते शब्दा अनिश्चिताख्याने निपात-संज्ञका भवन्ति । पेक्ख इर तेण हदो (आदिमः ६-५१ सू० द्रष्टव्यः । तेण ४-६ तदोन्यलोपः ५-१२ एत्वं ५-४ टा=ण (१) । अन्त्यः ४-६ हनोऽन्त्यलोपः १२-३ त=द ५-१ ओ) अज्ज किर तेण ववसिओ । (व्यवासित इत्यत्र ३-२ यलोपः प्राय इति २-२ वलोपो न २-२ तलोपः ५-१ ओ शे० स्प०) अअं किल सिविणओ (२-२ यलोप ४-१२ मबिं शे० स्प० । अन्त्यं १-३ सू० द्रष्टव्यं) । प्रेक्षस्व किल तेन हतः । अद्य किल तेन व्यवसितः । अयं किल स्वप्नः ॥ ५ ॥

हुं क्खु निश्चयावितर्कसम्भावनेषु ॥ ६ ॥

हुं, क्खु इत्येतौ निश्चयवितर्कसम्भावनेषु निपातसंज्ञकौ भवतः । हुं रक्खसो । (हुं स्प० ३-२९ क्ष=ख ३-५० खद्वि० ३-५१ ख=क् ४-१ ह्रस्वः ५-१ ओ) गुरुओ क्खु भारो(५-१ ओत्वम् अन्यत्स्पष्टम् ) । हुं राक्षसः । गुरुः खलु भारः ॥६॥

णवरः केवले ॥ ७ ॥

णवरः इत्ययं शब्दः केवलेर्थे निपातसंज्ञो भवति । णवर अण्णं (अन्न शब्दस्य २-४२ न्=ण ४-१२ मविं०(२)॥ ७ ॥

आनन्तर्ये णवरि ॥ ८ ॥

---

(१) तेनेत्यत्र २—४२ इति णत्वमात्रमिति केचित् ।

(२) केवलमन्नमित्यर्थः । केचित्तु अन्य, शब्दस्य ३—२ यलोपः २-४२ न-ण ३-५० णद्वि० शे० पू०)

णवरि इत्ययं शब्द आनन्तर्ये निपातसंज्ञो भवति । णवरि (स्पष्टं) ॥ ८ ॥

किणो प्रश्ने(१) ॥ ९ ॥

किणो इत्ययं शब्दः प्रश्ने निपातसंज्ञो भवति । किणो धुव्वसि (८-५७ य=व्व ७-२ थास्=सि) किणो हसासि । (किणो स्प० ७-२ सिप्=सि) किन्तु धूयसे । किन्तु हससि ॥ ९ ॥

अव्वो(२) दुःखसूचनासम्भावनेषु ॥ १० ॥

अव्वो इत्ययं शब्दो दुःखसूचनासम्भावनेषु निपातसंज्ञो भवति । दुःखे, अव्वो कज्जलरसरञ्जिएहिं अच्छीहिं(३) (अव्वो स्प० कज्जलरसेति संस्कृतसमः शब्दः-रञ्जितेत्यस्य २-२ तलोपः ५-१२ अ=इ ५-५ भिस्=हिं । अन्त्ये २-३० क्ष=छ ३-५० क्षद्वि० ३-५१ च्=छ् ४-२० स्त्रीत्वे ई ५-५ भिस्=हिं) । सूचनायाम् , अव्वो अवरं विअं । २-२५ प=व ५-३ अमोऽकारलोपः । ४-१२ मविं० शे० ९-३ सू० स्प०) सम्भावने, अव्वो णमिव अत्तुं । (३-१ दलोपः ३-५० तद्वि० ४-१२ मविं० ) अहो कज्जलरसरञ्जिताभ्यामक्षिभ्याम् । अहो अपरमिव । अहो एनमिवात्तुम् ॥ १० ॥

अलाहि निवारणे ॥ ११ ॥

अलाहि इत्ययं शब्दो निवारणे निपातसंज्ञो भवति । अ-

(१) किणो कीस किमु परिप्रश्ने । का० पा० ।

(२) अद्यो अव्वो, वो । अथो दुःखसूचनाभाषणेषु । का० पा० ।

(३) प्राकृते द्विवचनाभावात् बहुवचनम् ।

ळाहि कळहळेसेण। अळाहि कळहबन्धेण। (संस्कृतसमौ कलहो बन्धश्च २-४३ श्=स् ८-४ टा=ण ५-१२ ए शे० स्प०) अळं कळहळेशेन। अळं कळहबन्धेन॥ ११॥

अइवले सम्भाषणे॥ १२॥

अइ, वले इत्येतौ शब्दौ निपातसंज्ञकौ भवतः। अइ मूलं पसूसइ (अइ स्प० मूलं संस्कृतसमः शे० ३-३ रलोपः २-४३ श, ष्=स ३-२ यलोपः ८-४६ उदीर्घः ७-३१ ति=इ) वले किं कलेसि। (वलेस्प० किं संस्कृतसमः ८) २-२ यलोपः ७-२ सिप्=सि ७-३४ एत्वं-कले शे० स्प०) अवले अपि मूलं प्रशुष्यति। वले किं कलयसि अवले॥ १२॥

णवि वैपरीत्ये॥ १३॥

णवि इत्ययं शब्दो वैपरीत्ये निपातसंज्ञो भवति। णवि तह पहसइ बाला। (तह १-१० सू०स्प० ३-३ रलोपः ७-१ति=इ बाला इति संस्कृतसमः) विपरीतं तथा प्रहसति बाला॥ १३॥

सू कुत्सायाम्॥ १४॥

सू इत्ययं शब्दः कुत्सायां निपातसंज्ञो भवति। सू सिविणो। (सिविणो १-३ सू० स्प०) धिक् स्वप्नः॥ १४॥

रे अरे हिरे सम्भाषणरतिकलहाक्षेपेषु॥ १५॥

रे, अरे, हिरे इत्येते शब्दाः सम्भाषण, रति, कलहा, क्षेपेषु निपातसंज्ञा भवन्ति यथासंख्यम्। रे मा करेहि। णाऔसि अरे। हि दूठोसि हिरे (रेस्प० संस्कृतसमो मा शब्द, १२-१५ कृञ्=कर ७-३४ एत्वं १२-२७ परस्मैपदं, संस्कृत-

वत् लोटः सेर्हिः । ( २-४२ न्=ण २-२ गलोपः ७-६ स्प० सि, । अरे स्प०) (१-१८ ऋ=इ ३-१० ष्ठ=ठ ३-५० ठद्वि० ३-५१ ठ-ट ५-१ ओ) । रे मा कुरुष्व । नागोसि अरे । दृष्टोऽसि हिरे ॥ १५ ॥

म्मिवमिवविआ इवार्थे ॥ १६ ॥

म्मिव, मिव, विअ, इत्येते शब्दा इवार्थे निपातसंज्ञका भवन्ति । गअणं म्मिव—गअणं मिव— गअणं विअ कसणं (२-२ गलोपः २-४२ न्=ण् ५-३० विं०) अन्त्ये ३-६१ वर्णे नित्यं विप्रकर्षः । पूर्वस्य तत्स्वरता च) । गगनमिव कृष्णम् ॥ १६ ॥

अज्ज आमन्त्रणे ॥ १७ ॥

अज्ज इत्ययं शब्द आमन्त्रणे निपात्यते । अज्ज महाणुभाव किं करोसि (अज्ज स्प० । २-४२ न्=ण २-२७ भ=ह् प्राय इति २-२ वलोपो न) (७-२ सि, शेषं ९-१५ सू० स्पष्टम्) । अहो महानुभाव किं करोषि ॥ १७ ॥

शेषः संस्कृतात् ॥ १८ ॥

उक्तादन्यः शेषः । प्रत्ययसमासतद्धितलिङ्गवर्णादिविधिः शेषः संस्कृतादवगन्तव्यः । इह ग्रन्थविस्तरभयान्न दर्शितः ॥ १८ ॥

इति प्राकृतप्रकाशे निपातसंज्ञाविधिर्नाम नवमः परिच्छेदः ।



# अथ दशमः परिच्छेदः ।

**पैशाची ॥ १ ॥**

पिशाचानां भाषा पैशाची, सा च लक्ष्यलक्षणाभ्यां स्फुटी क्रियते ॥ १ ॥

**प्रकृतिः शौरसेनी ॥ २ ॥**

अस्याः पैशाच्याः प्रकृतिः शौरसेनी । स्थितायां शौरसेन्यां पैशाचीलक्षणं प्रवर्त्तयितव्यम्(१) ॥ २ ॥

**वर्गाणां तृतीयचतुर्थयोरयुजोरनाद्योराद्यौ(२) ॥ ३ ॥**

वर्गाणां तृतीयचतुर्थयोर्वर्णयोरयुक्तयोरनादौ वर्तमानयोः स्थाने आद्यौ प्रथमद्वितीयौ भवतः। गकनं ५-३० सोत्रि० २-२ सूत्रबाधः एवं अग्रेऽपि यथास्थानेषु पूर्वसूत्राणां बाधो ज्ञेयः । ) मेखो । राचा । णिच्छरो । वटिसं । दसवतनो । माथवो । गोविन्तो केसवो । सरफसं । सलफो । (णिज्झरो ३-५१ सू० स्प० अत्र ज्=च् , झ्=छ। वडिसं २-२३ सू० स्प० अत्र ड=ट शे० स्प० । दसवतन केसव सलफ इत्येतेषु २-४३ श=स अन्यत्सर्वं स्पष्टम् । विभक्तयः पञ्चमपरिच्छेदस्थ सूत्रैर्यथालक्षण-

---

( १ ) इति वेदितव्यमिति शेषः ।

( २ ) केचित् 'अनाद्य वयुजः' इति विभज्य:' अनादौ वर्तमानाः वर्णाः सर्वे असयुक्ताः प्रयोक्तव्याः । कसणो । पणयं ॥ कृष्णः । प्रणयम् ॥ ततः 'तथयोर्दधो' ॥ ( उक्तोऽर्थः ) इति योगविभागेन व्याचख्युः । का० पा० ।

म् साधनीयाः । शे० स्प०) अयुजोरिति किम् । संगामो ३-२ रलोपः ३-५० गद्वि० ५-१ ओ=संग्रामः ) वग्घो, इत्यादि । (३-२ यलोपः ३-३ रलोपः ३-५० घद्वि० ३-५१ घ्=ग् ४-१ इति ह्रस्वः ५-१ ओ) अनादाविति किम् । गमनं (स्प०) इत्यादि । गगनम् , मेघः, राजा, निर्झरः, बडिशम् , दशवदनः, माधवः, गोविन्दः, केशवः, सरभसम् , शलभः, संग्रामः, व्याघ्रः, गमनम् ॥ ३ ॥

इवस्य पिवः ॥ ४ ॥

इवशब्दस्य स्थाने पिव इत्ययमादेशो भवति । कमलं पिव मुखं (कमलं, मुखं संस्कृतसमौ शब्दौ शे० स्प०) ॥ ४ ॥

णो नः ॥ ५ ॥

णकारस्य स्थाने न इत्ययमादेशो भवति । तलुनी । (स्प०) तरुणी(१) ॥ ५ ॥

ष्टस्य स्टः ॥ ६ ॥

ष्ट इत्यस्य स्थाने स्ट इत्ययमादेशो भवति । कस्टं मम वट्टइ (४-३० वि० । मम तत्समः । ३-२२ र्तस्य टः ३-५० टद्वि० ७-१ त=इ) कष्टं मम वर्तते ॥ ६ ॥

स्नस्य स्नः ॥ ७ ॥

स्न इत्यस्य स्थाने स्न इत्ययमादेशो भवति । सनानं । सने-

(१) र-सोर्ल—शौ ॥ ८ । ४ । २८८

मागध्यां रेफस्य दन्त्यशकारस्य च स्थाने यथासंख्यं लकारस्तालव्यशकारश्च भवति । हे० । बाहुलकाद् पैशाच्यामपि भवति ।

हो (स्प० पू० विभक्तिः साध्या)। स्नानम् स्नेहः ॥ ७ ॥

र्यस्य रिअः ॥ ८ ॥

र्य इत्यस्य स्थाने रिअ इत्ययमादेशो भवति। भारिआ। भार्या ॥ ८ ॥

ज्ञस्य ञ्ञः ॥ ९ ॥

ज्ञ इत्यस्य स्थाने ञ्ञ इत्ययमादेशो भवति। विञ्ञातो (५-१ ओ शे० स्प०) सव्वञ्ञो। (३-३ रलोपः ३-५० वद्वि० शे० स्प० पू०) विज्ञातः। सर्वज्ञः ॥ ९ ॥

कन्यायां न्यस्य ॥ १० ॥

कन्याशब्दे न्यस्य स्थाने ञ्ञ इत्ययमादेशो भवति। कञ्ञा (स्पष्टं) ॥ १० ॥

ज्ज च्च ॥ ११ ॥

ज्जशब्दस्य शौरसेनीसाधितस्य च्च इत्ययमादेशो भवति। कच्चं। (१)कार्यम् ॥ ११ ॥

राज्ञो राचि टाङसिङस्ङिषु वा ॥ १२ ॥

राजन् शब्दस्य टा, ङसि, ङस्, ङि, इत्येतेषु परतो राचि इत्ययमादेशो वा भवति। राचिना (५-४१ टा=णा कृते १०-५ णा=ना(२) शे० स्प०) रञ्ञा (राज्ञा अत्र १०-९ ज्ञा=ञ्ञा ह्रस्वः संयोग इति ह्रस्वः एवमग्रेऽपि)। राचिनो (५-३८ ङसि,

(१) ३-१७ प्रतिपादितम्येत्यर्थः तत्र ज्ज इति पाठान्तरं दृश्यते। प्राकृतस्य शौरसेनी व्यवहारस्य प्रायशो दर्शनाच्च ॥

(२) लाक्षणिकस्याऽपीति साम्प्रदायिकाः।

ङस्=णो(१) १०-५ णो=नो) रञ्ञो राचिनि, रञ्जि । (राचि=ङि ५-३८ ङि णो शे० पू०) राज्ञः । एतेष्विति किम । राचा । राचानं । रञ्ञो (राजा इत्ययुक्तस्य १०-३ सू० जा=चा एवं राजानं=राचानं । राज्ञः १०-९ ज्ञ=ञ्ञ ॥ १२ ॥

क्त्वस्तूनं ॥ १३ ॥

क्त्वाप्रत्ययस्य स्थाने तूनं इत्ययमादेशो भवति । दातूनं (दाधातोः क्त्वास्थाने तूनमादेशः) कातूनं (८-१७ कृञ्=का शे० पू०) घेत्तूनं (८-१६ ग्रह=घेत् शे० स्प०) ॥ १३ ॥

हृदयस्य हितअकं ॥ १४ ॥

हृदयशब्दस्य हितअकं निपात्यते । हितअकं हरसि मे तलुनि (१-२७ ऋ=अ ७-२ थास् , सिप्=सि । मे, तत्समः तलुनि ५-२९ ह्रस्वः शे० १०-५ सू० स्प०) ॥ १४ ॥

इति प्राकृतप्रकाशे पैशाचिको नाम दशमः परिच्छेदः(२) ॥

(१) तत्र ङस् ग्रहणात् ङसराप ग्रहण ।

(२) ञ्ञोञ्ञः पैशाच्याम् ८ । ४ । ३०३ ॥ अभि मञ्ञु । पुञ्ञ-कम्मो । पुञ्ञाहं । कञ्ञका ।

लोलः ॥ ८ । ४ । ३०८ ॥ लकारस्य लकार एव । सीलं । कुलं । सलिलं ॥ नकगजादिषट्शसम्यन्तसूत्रोकम् ८ । ४ । ३२४ । इति सूत्रेण प्रायो द्वितीय परिच्छेदस्थ कार्याभावोऽवज्ञेयः । यथा सुबुला । क्वचित्तृतीयस्यापि । तेन भगवती पव्वतीत्यादौ न तलोपः । पताका। वेतसो इत्याद्यपि च सिद्ध्यति। तथा च मकरकेतू—सगरपुत्तवचनं । विजयसेनेन लपितमित्यादि सङ्गच्छते । शषोः सस्तु भवति "शषोः सः" ८ । ४ । ३०९ । इति पुनः सूत्राऽऽरम्भाद् ।

# अथैकादशः परिच्छेदः ।

**मागधी ॥ १ ॥**

मागधानां भाषा मागधी, लक्ष्यलक्षणाभ्यां स्फुटी क्रियते।१।

**प्रकृतिः शौरसेनी ॥ २ ॥**

अस्या मागध्याः प्रकृतिः शौरसेनी(१)इति वेदितव्यम् ॥२॥

---

हृदयेयस्य पः ८।४।३१०। हितपकं। किंपि किंपि हितपके अत्थं चिन्तयमानी। टोस्तुर्वा ८।४। ३११। कुतुम्बकं—कुटुम्बकं।

दृधून त्थूनौ ष्टुः ८।४।३१३ नदृधू-नत्थून। तदृधून। तत्थून-र्य-स्न-ष्टां रिय-सिन-सटाः क्वचित्।८।४। ३१४॥ यथा संख्यम। भार्या। भारिया॥ स्नातम्। सिनातम॥ कष्टम् कसटम्॥ क्वचिदिति किम सुज्जो-सुनुसा-तिट्ठो इत्यादि। सूर्यः। स्नुषा। दिष्टम।

याहशादेर्दु स्तिः,-८।४। ३१७-यातिसो-तातिसो-केतिसो-पातिसो-युह्मातिसो-अह्मातिसो। याहशः। ताहशः। कीहशः। एता-हशः। युस्माहशः। अस्माहशः। अन्याहशस्य तु अञ्ञा हशो इति शेषं शोरसेनीवदवगन्तव्यम्।

हेमस्तु पैशाची, शुद्ध चूलिका भेदेन द्विधा भित्वा वर्गाणामिति प्रतिपादितं कार्यं चूलिका विषयकं मन्यते। पैशाच्यां दकारस्य तकार विधानार्थं 'तदोस्तः' ८।४। ३०७ सूत्रमेव पठितवान्, मतन परवसो। मदन परवशः। इति। अत एव पैशाच्यां सगर पुत्तवचनं। भगवतीत्याहुदाजहार। तत्र रस्य लोवेति भेद-मेकमित्थमुदाजहार। 'उच्छलन्ति समुद्दा सइला निपतन्ति तं हलं नमथं इति। अन्यत् पूर्ववत्।

(१) प्राकृतस्याप्यत्र ग्रहणं वेदितव्यम्।

षसोः शः ॥ ३ ॥

षकारसकारयोः स्थाने शो भवति । माशे । विलाशे । (स्प०) माषः । विलासः ॥ ३ ॥

जो यः ॥ ४ ॥

जकारस्य यकारो भवति । यायदे । (प्रायो ग्रहणात् २-२ यलोपो न १२-३ त्=द्) जायते ॥ ४ ॥

चवर्गस्य स्पष्टता तथोच्चारणः ॥ ५ ॥

चवर्गो यथा स्पष्टस्तथोच्चारणो भवति । पलिचए (रसोर्लशौ ८।४।२८० हेम० सू० र्=ल २-२ यलोप एत्वं पूर्ववत्) गहिदच्छले (२-२७ ऋ=अ १२-३ त=द शे० पू० ) वियले (११-४ ज=य शे० पू० ) णिज्झले । एत्वं पूर्ववत् शे० ३-५१ सू० स्प० ) परिचयः । गृहीतच्छलः । विजलः । निर्झरः ॥ ५ ॥

हृदयस्य हडक्कः ॥ ६ ॥

हृदयस्य स्थाने हडक्को भवति। हडक्के आलले मम (स्पष्ट०) हृदये आदरो मम ॥ ६ ॥

र्यर्जयोर्य्यः(१) ॥ ७ ॥

र्यकारर्जकारयोः स्थाने य्यो भवति । कय्ये (संयोगे ह्रस्वः ११-१० एत्वम् ) दुय्यणे । ( २-४२ न्=ण पूर्ववत् एत्वम् ) कार्यम् । दुर्जनः ॥ ७ ॥

---

(१) क्वचिद् ज्ज, इति पाठस्तन्मते । कज्जं दुज्जनो इति ।

क्षस्य स्कः ॥ ८ ॥

क्षस्य स्थाने स्ककारो भवति । लस्कशे । दस्के (पलिच-एत्वत् र=ल ११-३ स=श एत्वं माशेवत् एवं दस्के) । राक्षसः । दक्षः ॥ ८ ॥

अस्मदः सौ हके हगे अहके ॥ ९ ॥

अस्मदः स्थाने सौ परतो हके, हगे, अहके इत्येत आदेशा भवन्ति । हके, हगे, अहके भणामि ; (स्प०) अहं भणामि ॥९॥

अत इदेतौ लुक् च ॥ १० ॥

सावित्यनुवर्तते अकारान्ताच्छब्दात्सौ परत इकारैकारौ भवतः पक्षे लोपश्च । एशि (एतत्सूत्रेण इकारैकारौ पक्षे लुप्यते ११-३ ष=श-) लाआ (राजा इत्यत्र रसोर्लशौ इति हेम० व्याकारणानुसारं र=ल शे० ५-३६ सू० स्प०) एशे (एशि-वत् शकारः शे० स्प०) पुलिशे (लाआवत् लकारः शे० पू०) । एष राजा । एष पुरुषः ॥ १० ॥

क्तान्तादुश्च ॥ ११ ॥

क्तप्रत्ययान्ताच्छब्दात्सौ परतः उकारश्च भवति । चकाराद् इदेतौ लुक च । हशिदु, हशिदि, हशिद, । (शकारः पूर्ववत् शे० स्प० पू०) हसितः ॥ ११ ॥

ङसो हो वा दीर्घत्वं च ॥ १२ ॥

ङसः षष्ठ्येकवचनस्य स्थाने हकारादेशो वा भवति तत्सं-योगे च दीर्घत्वम् । पुलिशाह (पुलिशवत् र=ल शकारश्च शे० स्प०) धणे (२-४२ न=ण् एत्वं माशेवत्) (पक्षे) पुलिशश्श-

धणे । (५-८ ष्म्=स्स ११-३ स्स=श्श शे० पू०) पुरुषस्य धनम् ॥ १२ ॥

अदीर्घः सम्बुद्धौ ॥ १३ ॥

अदन्तादित्येव अदन्ताच्छब्दादकारो दीर्घो भवति सम्बुद्धौ। पुलिशा आगच्छ। माणुशा (२-४२ न्-ण ११-३ ष=श ५-२ जसो लोपः) आगच्छ । सम्बुद्धाविति किम् । ब्रह्मणश्श धणे । ५-४७ सू०स्प०शे० पुलिशश्शवत्) ब्राह्मणस्य धनम् ॥ १३ ॥

चिट्ठस्य चिष्ठः ॥ १४ ॥

चिट्ठस्य(१) स्थाने चिष्ठ इत्ययमादेशो भवति । पुलिशे चिष्ठदि । (पुलिशे व्याख्यातः १२-१६ चिट्ठ=चिष्ठ १२-३ ति=दि) पुरुषास्तिष्ठति ॥ १४ ॥

कृञ्मृङ्गमां क्तस्य डः ॥ १५ ॥

डुकृञ् करणे, मृङ् प्राणत्यागे, गम्लृ गतौ एतेषां क्तप्रत्ययस्य स्थाने डकारो भवति। कडे । मडे । गडे । (१-२७ ऋ=अ एत्वं सोर्लोपश्च माशेवत् शे० स्प०) कृतः । मृतः । गतः ॥१५॥

क्त्वो दाणिः ॥ १६ ॥

क्त्वाप्रत्ययस्य स्थाने दाणि इत्ययमादेशो भवति । शहिदाणि गडे । (१-३ स=श ७-३३ इत्वं शे० स्प० । कारिदाणि (१२-१५ कृञ्=कर डकारः पू० शे० स्प०) आअडे । २-२ गलोपः शे० पू०) सोढ्वा गतः । कृत्वाऽऽगतः ॥ १६ ॥

शृगालशब्दस्य शिआलाशिआलकाः ॥ १७ ॥

(१) "स्थश्चिट्ठ" इति साधितस्यास्यार्थः ॥

शृगालशब्दस्य स्थाने शिआलादय आदेशा भवन्ति। शिआले आअच्छदि। शिआलके आअच्छदि (आङ्पूर्वकगमेः २-६ गलोपः १२। ११०) शृगाल आगच्छति ॥ १७ ॥

इति प्राकृतप्रकाशे मागध्याख्य एकादशः परिच्छेदः (१)॥

---

( १ ) अत एत् सौ पुंसि मागध्याम् ८। ४। २८७ ॥

मागध्यां भाषायां सौ परे अकारस्य एकारो भवति पुंल्लिङ्गे। एष मषः। एशे मेशे। एशे पुलिशे करोमि भदन्त। करेमि भन्ते ॥ अत इति किम्। णिही। कली। गिली ॥ पुंसीति किम् ॥ जलम् ॥ [ रसोर्लशौ ] र। नले। कले ॥ स। दश। उभयोः ॥ शालशे। पुलिशे।

स-षोः संयोगे सोऽग्रीष्मे ८। ४। २८९ ॥

मागध्यां सकारषकारयोः संयोगे वर्तमानयोः सो भवति ग्रीष्म शब्दे तु न भवति ॥ उर्ध्वलोपाद्यपवादः ॥ स, पस्खलदिहस्ती। बुहस्पदी। मस्कली। ष, सुस्कदालु। कस्टं। विस्नु। शस्पकवले। उस्मा। निस्फल। धनुस्खण्डं ॥ अग्रीष्म इति किम्। गिम्हवाशले ॥ ट्टष्ठयाः स्टः ८। ४। २९० ॥ द्विरुक्तस्य टस्य षकाराक्रान्तस्य च ठकारस्य मागध्यां सकाराक्रान्तः स्टकारो भवति ॥ ट्ट, भस्टालिका। भस्टिणी ॥ ष्ठ, शुस्टु कदं। कोस्टागालं ॥

स्थ, र्थयोस्तः ८। ४। २९१ ॥ स्थ, र्थ इत्येतयोः स्थाने मागध्यां सकाराक्रान्तस्तो भवति। स्थ। उवस्तिदे। शुस्तिदे ॥ र्थ। अस्तवदी। शस्तवाहे ॥

जद्ययां यः ८। ४। २९२ ॥ मागध्यां ज, द्य, यां स्थाने यो भवति ॥ ज। यणवदे ॥ द्य। मय्यं। अय्य किल विय्या हले आगदे ॥ यस्य यत्व विधानम्। आदेर्योजः ८। १। २४५ ॥ इति बाधनार्थम् ॥

# अथ द्वादशः परिच्छेदः ।

## शौरसेनी(१) ॥ १ ॥

शूरसेनानां भाषा शौरसेनी । सा च लक्ष्यलक्षणाभ्यां स्फुटी क्रियते । इतिवेदितव्यम् । अधिकारसूत्रमेतदापरिच्छेदसमाप्तेः॥१॥

व्रजोञः ॥ ८ । ४ । २९४ ॥ मागध्यां व्रजेर्जकारस्य ञो भवति । यापवादः ॥ वञ्ञदि ॥

छस्यश्चोनादौ ॥ ८ । ४ । २९५ ॥

मागध्यामनादौ वर्तमानस्य छस्य तालव्यशकाराक्रान्तश्चो भवति ॥ गश्च । पिश्चिले । पुश्चदि ॥ लाक्षणिकस्यापि । आपन्नवत्सलः । अवन्नवश्चले ॥ तिर्यक्, तिरिच्छि । तिरिश्चि ॥ अनादाविति किम् । छाले ॥ स्कः पेक्षा चक्षोः ८ । ४ । २९७ ॥ मागध्यां प्रेक्षे राचक्षेश्च क्षस्य सकाराक्रान्तः को भवति ॥ जिह्वामूलीयापवादः । पेस्कदि । आचस्कदि ॥

अवर्णा द्वा ङसो डाहः ॥ ८ । ४ । २९९ ॥ मागध्यामवर्णात्परस्य ङसो डित् आह इत्यादेशो वा भवति ॥ हगे न एलिशाह कम्माह काली ॥ पक्षे हिडिम्बाए घडुक्कय शोके ण उवशमदि ॥

आमो डाहँ वा ८ । ४ । ३०० ॥ मागध्यामवर्णात्परस्य आमोऽनुनासिकान्तोडित् आहादेशो वा भवति ॥ शय्यणाहँ सुहं । पक्षे । नलिन्दाणं । व्यत्ययात्प्राकृतेऽपि ताहँ तुम्हाहँ । अम्हाहँ । सरिआहं । कम्माहं ॥

अहं वयमोर्हगे ८ । ४ । ३०१ ॥ मागध्यामहं वयमोः स्थाने हगे इत्यादेशो भवति ॥ हगे शक्का वदालतिस्त णिघाशीधीवले । हगे शम्पत्ता ॥ शेषं शौरसेनीवत् ॥ इति हेमः ।

(१) अस्मिन् परिच्छेदे सर्वत्र वृत्त्यनुपलब्धिर्वर्तते । तत्र मया यथा मति भामहानुसृतां शैलीमवलम्ब्य वृत्तिर्वितन्यते ।

प्रकृतिः संस्कृतम् ॥ २ ॥

शौरसेन्यां ये शब्दास्तेषां प्रकृतिः संस्कृतम् ॥ २ ॥

अनादावयुजोस्तथयोर्दधौ ॥ ३(१) ॥

अनादौ वर्तमानयोरसंयुक्तयोस्तथयोर्दधौ भवतः। तस्य मारुदिना मन्तिदो (त=द शे० संस्कृतवत्–३–३ रलोपः ५–१ ओ) थस्य, करेध (१२–१५ कृञ्=कर७–३४एत्वं) तधा स्प०) असंयुक्तयोरित्येव। तेन अज्जउत्त–हला सउन्तले इ-त्यादौ न। अनादाविति किम्। तस्स। मारुतिना मन्त्रितः। कुरुथ। तथा। आर्यपुत्र। हला शकुन्तले। तस्य ॥ ३ ॥

व्यापृते डः ॥ ४ ॥

व्यापृतशब्दे तस्य डो भवति। पूर्वसूत्रापवादः। वावडो (३–२ यलोपः २-१५ प-व ५-१ ओ) व्यापृतः ॥ ४ ॥

पुत्रेऽपि क्वचित् ॥ ५ ॥

क्वचित् पुत्रशब्देऽपि तस्य डो भवति। पुडो (३–३ रलो-पः) पक्षे पुत्तो(३–३ रलोपः ३–५० तद्वि० ५–१ ओ) ॥५॥

इ गृध्रसमेषु ॥ ६ ॥

गृध्रसमेषु ऋकारस्य इर्भवति। गिद्धो (३–३ रलोपः(३–१

(१) अधिकारोऽयम्। अत्र केचिद् "अनादावयुजः" अनादौ वर्त्तमाना वर्णाः सर्वे असंयुक्ताः प्रयोक्तव्याः॥ कसणो। पणयं। कृष्णः। पण्यम्। इति। ततः "तथयोर्दधौ" इति च छेदेन व्याख्या-नयन्तः। का० पा०।

दलोपः-३-५० घद्वि० ३-५१ घ्=द् ५-१ ओ) गृद्धः ॥६॥

**ब्रह्मण्यविज्ञयज्ञन्यकानां ण्यज्ञन्यानां ञ्जो वा ॥७॥**

एतेषां ण्यज्ञन्यानाञ्जो वा भवति। पैशाच्यां तु नित्यमिति विशेषः ब्रम्हञ्जो (३-३ रलोपः ३-८ ह्मस्य विपर्ययः ५-१ ओ) विञ्जो जञ्जो कञ्जा, (एते १०-९। १०-१० सूत्रयोः स्प०) पक्षे-बह्मण्णो-विण्णो, कण्णा ३-४४ सू० द्रष्टव्यम् ॥ ७ ॥

**सर्वज्ञेङ्गितज्ञयोर्णः ॥ ८ ॥**

एतयोः संयुक्तस्यान्त्ययोर्णो भवति। सव्वण्णो (३-३ रलोपः ३-३ वणौ द्वि० ५-१ ओ) इङ्गिअण्णो (२-२ तलोपः शे० पूर्व०) ॥ ८ ॥

**क्त्व इअः(१) ॥ ९ ॥**

क्त्वा इत्यस्य इअ आदेशः। भणिअ। भविअ। (स्पष्टं) भणित्वा। भूत्वा ॥ ९ ॥

**कृगमोर्डुअः(२) ॥ १० ॥**

आभ्यां परस्य क्त्वाप्रत्ययस्य डुअ इत्यादेशः। कडुअ-कृत्वा। गडुअ=गत्वा (स्प०) ॥ १० ॥

---

(१) सिद्ध हेमस्तु "क्त्व इय दूणौ। ८ ४। २७१। भवतः। भोदूण। भविय। हविय। होदूण। पंठिय पठिदूण। रमिय-रन्दूण। पक्षे भोत्ता। होत्ता। पठित्ता। रन्ता इति"।

ता अहं ब्रह्मणो भविअ दाणिं भवन्तं सीसेण पडिअ विण्णेमि। तदहं ब्राह्मणो भूत्वेदानीं भवन्तं शीर्षेण पतित्वा विज्ञापयामि।

(२) कृगमो ड डुअ। ८। ४। २७२ कडुअ। गडुअ पक्षे करिय, करिदूण। गच्छिय, गच्छिदूण।

णिर्जश्शसोर्वा क्लीबे स्वरदीर्घश्च ॥ ११ ॥

नपुंसके जश्शसोर्णिर्भवति पूर्वस्य स्वरस्य दीर्घश्च । वणाणि-धणाणि=वनानि धनानि (२-४२ नू=ण शे० स्प०) ॥११॥

भो भुवस्तिङि ॥ १२ ॥

भूधातोर्भो भवति तिङि । भोमि=भवामि ॥ १२ ॥

न लृटि ॥ १३ ॥

भूधातोर्लृटि भो न भवति-भविस्सिदि=भविष्यति ॥१३॥

ददातेर्दे(१) दइस्स लृटि ॥ १४ ॥

दाधातोर्दे आदेशो भवति तिङि, दइस्स इति लृटि च ॥ देमि=ददामि दइस्स=दास्यामि ॥ १४ ॥

डुकृञः करः ॥ १५ ॥

डुकृञ् धातोः कर आदेशो भवति । करेमि (७-४१ सू० स्प० ) ॥ १५ ॥

स्थश्चिट्ठः ॥ १६ ॥

तिङि । एशे चालुदत्ते रुक्खवाडिआए चिट्ठादि । स्प०) ॥१६॥

स्मरतेः सुमरः ॥ १७ ॥

तिङि, स्मृधातोः केवलं सुमर इत्यादेशो भवति । स्मरतेर्भरसुमरौ प्राप्तौ तदेकं भरादेशं निवर्तयति । सुमरइ=स्मरति ८-१४ सू० स्प० ॥ १७ ॥

---

( १ ) अत्र केचित् सूत्रद्वयं लिखितवन्तः । "तदस्तेदे" । तच्छब्दस्य तेदे आदेशो भवति । तेदो गदो । तेदं पुच्छ । तेदेण किदं । इति ततः "ददातेर्देदस्य लृटि" । दा धातोः दकारस्य लृटि परतो दे आदेशो भवति । देस्सदि । इति च । का० पा० ।

दृशो: पेक्खः ॥ १८ ॥

दृश् धातोः पेक्खादेशस्तिङि । पेक्ख=पश्य । अरेरे पेक्ख पेक्ख ओहारिओ पवहणो वच्चइ मज्झेण राअमग्गस्स । एदं ताव विआरइ कस्स कहिं पवसिओ पवहणोत्ति ॥ १८ ॥

अस्तेरच्छः ॥ १९ ॥

अस्धातोस्तिङि अच्छादेशो भवति ॥ १९ ॥

तिपात्थि(१) ॥ २० ॥

अस्तेस्तिपासह त्थि इत्यादेशो । भवति । अत्थि=अस्ति । पसंसिदुं णात्थि मे वाआविहवो । प्रशंसितुं नास्ति मे वाग्विभवः ॥ २० ॥

भविष्यति मिपा स्सं वा स्वरदीर्घत्वं च ॥ २१ ॥

अस्तेर्मिपा सह स्सं इत्यादेशः पक्षे-धातोः स्वरदीर्घत्वं च । स्सं, आस्सं=भविष्यामि ॥ २१ ॥

स्त्रियामित्थी ॥ २२ ॥

स्त्री शब्दस्य स्थाने इत्थी इत्यादेशो भवति । इत्थी=स्त्री ।२२।

एवस्य जेव्व ॥ २३ ॥

स्पष्टम् । जेव्व=एव ॥ २३ ॥

इवस्य विअ ॥ २४ ॥

सुगमम् विअ=इव ॥ २४ ॥

अस्मदो जसा वअं च ॥ २५ ॥

(१) "मिपि थः"। मिपि परतः अस् धातोः थ आदेशो भवति । थम्मि । इति केचित् । का० पा० ।

अस्मदो जसा सह वअं इत्यादेशः । चकारात् अम्हेऽपि भवति । वअं । अह्मे=वयम् ॥ २५ ॥

सर्वनाम्नां ङेः सित्वा(१) ॥ २६ ॥

सर्वनाम्नां ङेः सप्तम्येकवचनस्य स्थाने सित्वा इत्यादेशो भवति सव्वसित्वा-इदरसित्वा=सर्वस्मिन्-इतरस्मिन् ॥ १६ ॥

धातोर्भावकर्तृकर्मसु परस्मैपदम् ॥ २७ ॥

शौरसेन्यामेव । भावे-सासाअसि । किंदाणि दासीएपुत्ता ? दुभिक्खकाले रुढरङ्को विअ उद्धकं सासाअसि एसा सा सेत्ति। किमिदानीं दास्याः पुत्र ? दुर्भिक्षकाले वृद्धरङ्क इव ऊर्द्धकं श्वासायसे, एषा सा सेति । कर्तरि अज वन्दामि=आर्य वन्दे कर्मणि -कामीअदि अदोज्जेव कामीअदि=अतएव काम्यते ॥२७॥

अनन्त्य(२) एच्च ॥ २८ ॥

अन्त्याभिन्ने वर्णे एत्वं च भवति । करेदि ॥ २८ ॥

मिपो लोटि च ॥ २९ ॥

मिपश्चैत्वं भवति लोटि परतः (३) ॥ २९ ॥

---

(१) केचित् "सर्वनाम्ना ङेः" सर्वनाम शब्दाना चतुर्थ्यैकवचनस्य वअं इत्यादेशो भवति । सव्ववअं । कवअं । महवअं । तुहवअं । सर्वस्मै । कस्मै । मह्यम् । तुभ्यम । ततः "सिव्वोर्धात्वो"रित्यादि इत्याहुः । का० पा० ।

(२) "अन्त्ये एव" सिव्वोर्धातोर्भावादिषु विहितं यद् परस्मैपदं तदन्त्य वर्णस्य एव भवति । इति केचित् । का० पा० ॥ गच्छदे । गच्छदि । हे० ।

(३) "मिपो लोटि च" लोटि परतऽन्त्ये मिप एव भवति, अहं

**आश्चर्यस्याच्चरिअं ॥ ३० ॥**

आश्चर्य इत्यस्य अच्चरिअमित्यादेशः अहह, अच्चरिअं अच्चरिअं ॥ ३० ॥

**प्रकृत्या(१) दोलादण्डदशनेषु ॥ ३१ ॥**

दोलादिषु प्रकृतिवद्भावो भवति ॥ ३१ ॥

**शेषं महाराष्ट्रीवत्(२) ॥ ३२ ॥**

अनुक्तं कार्यं महाराष्ट्रीवज्ज्ञेयम् । महाराष्ट्रीपदेनात्र प्राकृतस्य ग्रहणं बोध्यम् ॥ ३२ ॥

( इत्यभिनवायां वृत्तौ द्वादशः परिच्छेदः ) ॥

इति वररुचिप्रणीतसूत्रसहित-भामहविरचित-प्राकृतप्रकाशः समाप्तः ॥

---

करवामि अहं गच्छामि । अहं करवाणि गच्छानि इति केचिद् व्याचख्युः । का० पा० ।

( १ ) प्राकृतो-इति प्राकृतः शब्दः प्रयोक्तव्यः इति च व्याचख्युः । का० पा० ।

( २ ) पूर्वस्य पुरवः ८ । ४ । २७० ॥ शौरसेन्यां पूर्वशब्दस्य पुरव इत्यादेशो वा भवति । अपुरवं नाडयं । अपुरवागदं । पक्षे । अपुव्वं पदं । अपुव्वागदं ॥

दिरिचेचोः ८ । ४ । २७३ ॥ त्यादीनामाद्यत्रयस्याद्यस्येच चौ ८ । ३ । १३९ । इति विहितयोरिचे चोः स्थाने दिर्भवति वेति निवृत्तम् । नेदि । देदि । भोदि । होदि ॥

अतो देश्च ८ । । ४ । २७४ । अकारात्परयोरिचेचयोः स्थाने देश्च-काराद् दिश्च भवति । अच्छदे । अच्छदि ॥ गच्छदे । गच्छदि । रमदे रमदि । किज्जदे । किज्जदि । अत इति किम् । वसु आदि । नेदि । भोदि ।

भविष्यति स्सिः । ८ । ४ । २७५ शौरसेन्यां भविष्यदर्थे विहिते प्रत्यये परे स्सिर्भवति हिस्साहामपवादः ।

इदानीमोदाणिं । ८ । ४ । २७७ ॥ शौरसेन्यामिदानीमः स्थाने दाणिमित्यादेशो भवति । अनन्तर करणीयं दाणिं आणवेदु अय्यो । व्यत्ययात्प्राकृतेऽपि अन्न दाणिं बोहिं ॥

तस्मात्ता ८ । ४ । २७८ ॥ शौरसेन्यां तस्माच्छब्दस्य ता इत्या· देशो भवति ता जाव पविसामि । ता अलं एदिणा माणेण ॥

मोन्त्याण्णोवेदेतोः ८ । ४ । २७९ । शौरसेन्यामन्त्यान्मकारात्पर इदेतोः परयोर्णकारागमो वा भवति ॥ इकारे, जुत्तं णिमं जुत्तमिणं । सरिसं णिमं । सरिसं मिणं । एकारे, किं णेदं किमेदं । एवं णेदं । एवमेदं ॥ एवार्थेय्येव । २८० । स्पष्टम् । ममय्येव बम्भणस्स ॥

हञ्जे चेट्या ह्वाने । २८१ । शौरसेन्यां चेट्याह्वाने हञ्जे इति नि· पातः प्रयोक्तव्यः । हञ्जे चदुरिके ॥

हीमाणहे विस्मये निर्वेदे । २८२ । शौरसेन्यां हीमाणहे इत्ययं नि· पातो विस्मये निर्वेदे च प्रयोक्तव्यः विस्मये, हीमाणहे जीवन्त वच्छा मे जणणी ॥ निर्वेदे, हीमाणहे पलिस्सन्ता हगे एदेण नियविधिणो दुव्ववसिदेण ॥

णं नन्वर्थे २८३ । शौरसेन्यां नन्वर्थेणमिति निपातः प्रयोक्तव्यः । णं अफलोदया । णं अय्यमिस्सेहिं पुढमं येव आणत्तं । णं भवं मे अग्गदो चलदि । आर्षे वाक्यलङ्कारेऽपि दृश्यते । नमोत्थु णं । जयाणां । तयाणं ।

अम्महे हर्षे । २८४ । शौरसेन्याम् अम्महे निपातो हर्षे प्रयोक्तव्यः । अम्महे एआए सुम्मिला ए सुपलि गाढिदो भवं ॥ ही ही विदूषकस्य । २८५ । शौरसेन्यां ही ही इति निपातो विदूषकाणां हर्षे द्योत्ये प्रयोक्तव्यः ॥ ही ही–भो सम्पन्ना मणोरधा पिय वयस्सस्स ॥

इह हचोर्हस्य । इह शब्द सम्बन्धिनो "मध्यमस्येत्था हचौ" (८ । ३ । १४३) इति विहितस्य हचश्च हकारस्य शौरसेन्यां धो वा

भवति ॥ इध । होध । परित्तावध । पक्षे इह । होइ । परित्तायह ॥

नवार्योय्यः ८ । ४ । २६६ । शौरसेन्यां र्यस्य स्थाने य्यो वा भवति ॥ अय्य उत्त पय्याकुलीकदह्मि । पक्षे । अज्जो । पज्जा उलो । कज्ज परवसो ॥

शेषं प्राकृतवत् ॥ २८६ ॥ इति हेमः,

# अथ मार्कण्डेमुनीन्द्रकृत प्राकृतसर्वस्वानुसारि-सौरसेनी विशेषकार्याणि प्रदश्यन्ते—

वेदसो, अङ्गारो । इदभावः-वेतसः, अङ्गारः । वअरं, लवणं, लावण्णं, चउट्ठी, चउद्दही, मऊरो, मह्रूओ ओदभावः जधा, तधा कुमारी । ह्रस्वाभावः

पिण्डं इत्यादि सु एदभावः ॥ किंसुओ केसुओ=किंशुकम् ॥ तुण्डम्, इत्यादिषु ओत्वाभावः ॥

मोत्ती=मुक्ता । पोक्खरम-पुष्करम् । पोक्खरिणी=पुष्करिणी ॥ उलूहलो । ओदभावः ॥ ईदिसं, कीदिसं । एदभावः ।

पुरुषो, इदभावः ॥ जुहुट्ठिरो उवरि अदभावः वेअणा, देअरो, इदभावः ॥

पओट्ठो, वत्वाभावः ॥ देव्वं, अइत्वाऽभावः । गोरवं गउरवं । पोरवो गोरवो अउत्वाभावः ॥ आदभावः । क्वचिद् भवति पउरसं ॥

जादिसं तादिसं । मिओ=मृतः ॥ पिदणा=पृतना ॥ रुक्खो=वृक्षः नतु वच्छो ।

सीअरो (भ) चन्दिआ (म) न । पताकाऽव्यावृत गर्भितेभ्योऽन्यस्य तस्य दः ॥

पावो=पापः । कबन्धो=कबन्धः । (प०, म०, न) अउव्वं, अवरूवं अपूर्वम् ॥

जधा । भरधो । सोदामिणी, बहुलं न दलोपः। क्वचित् । हिअअं ।

ध, मौ दवदुच्चार्यौ मधुरम । ( उ० मदुरं ) रस्य लः क्वचित् ॥ हलिद्दा, महुरो ।

सहलं=सफलम् । रहरी=सफरी । पासाणो । (व०,इ० न) दस, दह–दश । नाम्नि दसरहो ॥ एआरह । वारह । सावो । (छ० न) ।

लङ्गलं । लोहलं । लंगूलं णत्वाभावः । जट्ठी=यष्ठी लत्वाभावः ॥ किरातो चत्वाभावः ॥ डज्झमाणो=दह्यमाणः । फोडओ=स्फोटकः । खत्वाभावः ॥ उत्थिदो । ठत्वाभावः ॥ खणो खीरं सरिक्खं छत्वाभावः ॥ सम्मद्दो गद्दहो उत्वाभावः । कुम्हण्डो हत्वाभावः अहिमण्णूअत्वाभावः ॥ जण्णसेणो=यज्ञसेनः । इङ्गिअज्जो इङ्गितज्ञः ॥ चिण्हम् , म्भाभावः ॥

वाहो वप्फो वाष्पः ॥ भिन्दिवालो । भिण्डिवालो । भिन्दिपालः ॥ अव्वह्मण्णं अव्वह्मज्जं अब्रह्मण्यम् ॥ कण्णआ कञ्ञआ कन्याः लोपाभाव ( सन्धौः ४–१ वत् ) कोदूहलं, थूलं द्वित्वाभावः । कालाअसो माअणम् अलुक् इदाणिं इदाणि लुक्वा मंसं । णूणं । कधं ॥

विहप्फदी बृहस्पतिः भआऽभावः ॥ पढुत्तणम्–त्तमभावः ॥ ङसेः दो एव क्वचित् अदन्तादा अपि 'तव कारणा किलिट्ठि सो जणो' ॥ अदन्ता ङे० रः=रुक्खे । इदुद्भ्यां ङेर्म्मिः–अग्गिम्मि वाउम्मि । इदुद्भ्यां जसो वो आदेशाभावः कइणो कअओ । भाणुओ । भाणओ ॥ स्त्रियां जस उदभावः । मालाओ । णईओ, वहूओ ॥ टा, ङसि, ङस्ङीनामेत्–वालाए । नईए । वहुए ॥

द्वितीयायां मातुः–मादरं ॥ किमादेः स्त्रियामीत्वाऽभावः=का । जा । ताए । इमाए ॥ क्लीवे शसो णि वा वणाणि–वणाइं ॥

इदमादेराम एसि मभावः । तथा अमासह इदमः सिमभावः ॥

इमाणं । काणं । जाणं । ताणं, एदाणं, एतेसां । आस, स्सा, त्तो, इति विभक्त्यादेशाः से इति एदादेशश्च न भवति ॥ कस्स । जस्स । तस्स, काए । ताए । इमाए । एदाए कदो, जदो । तदो इमादो ।

कुदो । इदो इति तु भवतः । आहा, इआ, आहे इत्यादयस्तु न

भवन्ति ॥ कस्सि काहि कत्थ तस्सि तहिं तत्थ ॥ स्मिन्न भवति ॥ इत्र-इह । इदं वनं, इणं धणं । इति द्वे क्लीबे । इअं बाला । अअं रुक्खो ॥ एसो जणो ॥ अदसश्चाऽहा भावः । अमु जणो । अमु । बहू । अमु वणं ॥ एतदस्सोर्ङसिङस्स्याम् । अदो । कारणादो ॥ तुमं (त्वं, त्वां वा) ॥ तुम्हे ( युयम्, युष्मान् वा ) तए ( त्वया, त्वयि ) । तुम्हेहिं=(युष्माभिः) तुम्हेहिन्तो=(युष्मभ्यम् , युष्मान्) । तुम्हाणं=युष्माकम् । तुम्हेसु=युष्मासु, तुमादो=त्वत् ॥ ते. दे, तु॰ म्ह=(तव) वो=(युष्मान् युष्माकाम्) अहं=अहं । वअं=वयम् अम्हे=वयम् ,-अस्मान् वा मे=मां । मए-(मया) मइ=मयि । ङसा मज्झादेशा भावः, (मत्) मे, मम, मह ॥ अम्हं, अम्हाणं=(अस्माकम्) मत्तो, ममादो अन्ये न भवन्ति ।

धातोः । परस्मैपदमेव ॥ त्रिष्वपि कालेषु लडेव प्रायेण ॥ त्यादे॰ स्तस्य दः-गच्छदु, भोदि, इत्यादि बहुत्वे तस्य धः ॥ उत्तमे म्हः । उत्तमे मिपा सह स्समेव=गामिस्सं इ० ॥ धातुतिङोर्मध्यविहिता ज्ज, ज्जा, हा इति त्रयः, तिङां स्थाने ज्ज, ज्जा इत्युभौ च, सोच्छं वोच्छं इत्यादयश्च न भवन्ति । देहि । भोदि । करिस्सदि इत्यादि ॥ भू=भो हो-भोदि, भाविस्सदि । क्ते-भूः । भूदं ॥ दृशेः पेच्छ=पेच्छदि-ब्रुवो बुच्च-बुच्चादि । कथेः कधः=कधेदि घ्रातेः जिग्घ=जिग्घदि । भातेर्भाअः=भाअदि । मृजेः फुसः फुसदि । घूर्णेः घुम्मः घुम्मदि । स्तोतुः थुणः=थुणादि । भियो भा=भादि । सृजतेः एसः । एसदि । लृटि दाअः दइस्सदि । चर्वेः चव्वः चव्वाइ ग्रहेर्गेण्डः गेण्डदि ग्रहेर्यपा सह गेज्झ-घेप्पौ-गेज्झदि, घेप्पदि ॥ शक्नोतेः सक्कु॰ णसक्कौ सक्कुणादि । सक्कादि । म्लायो मिआअदि । उदा सह ति॰ ष्ठतेः उत्थः=उत्थेदि ॥ स्वपेः सुअः सुअदि ॥ शीङ सुआदि । रुदे, रोवदि । रुदेः रोददि ॥ मज्जेः-बुड्डदि ॥

दुहादीनां यका सह दुब्भादयो न दुहीअदि । वहीअदि, लिहीअदि ॥

भिप्फो-(भीष्मः) सत्तुग्घो (शत्रुघ्नः) जेत्तिकं यावत् ( तेत्तिकं । पत्तिकं । भट्टा । धूदा । दुहिदिआ । इत्थी । भादा, भादुओ । जमादा, जामादुओ इत्यादयः ॥

दउात्ति-द्राग् । क्खु निश्चये विन्दुतः परे तु खु इत्येव । तं खु भणामि इत्यादि , व्व-इव । चन्दो व्व ॥

उजेव एवार्थे ॥ विन्दो परे, तंजेव । तंजेव्व इति ॥ णं—ननु । षिअ = इव ॥

इति शम्

हबराकोपाह्वेन श्रीउदयरामशास्त्रिकृता टिप्पणी समाप्ता ।



# अथ परिशिष्टम् ।

कर्पूरमञ्जरी, सेतुबन्ध, कुमारपालचरितादि प्राकृत-निबन्धज्ञानाय ग्रन्थान्तरेभ्योऽपभ्रंशादिभाषाप्रपञ्चाय परि-शिष्टम् प्रारभ्यते—

## तत्राऽपभ्रंशविचारः ।

युष्मदः सौ तुहुं । ८ । ४ । ३६८ ॥ अपभ्रंशे युष्मदः सौ परे तुहुं इत्यादेशो भवति ॥ तुहुं । त्वम् ।

जस्-शसो स्तुम्हे तुम्हइं । ८ । ४ । ३६९ ॥ अपभ्रंशे युष्मदः । जसि शसि च प्रत्येकं तुम्हे, तुम्हइं इत्यादेशो भवतः । तुम्हे तुम्हइ जाणइ, पेच्छइ ।

टा-ङ्यमा पइं तइं । ४ । ३७० ॥ अपभ्रंशे युष्मदः टा-ङि-अम् इत्येतैः सह पइं, तइं इत्यादेशौ भवतः ॥ टा-पइं मुक्का । एवं तइं । ङिना "पइं मइं बेहिं विणणगयहिं को जय सिरि तक्केइ । केसहि लेप्पिणु जम घरिणि भणसुहु को थक्केइ" ॥ एवं तइं । अमा सह-पइं मेल्लन्ति हे महु मरणु मइं मेल्लन्त हो तुज्झु । सारस जसु जो वेग्गला सो विकृदन्त हो सज्झु ॥ एवं तइं सर्वत्र ।

भिसा तुम्हेहिं । ८ । ४ । ३७१ । अपभ्रंशे युष्मदो भिसा सह तुम्हेहिं इत्यादेशो भवति ॥ तुम्हेहिं । युस्माभिः ।

ङसिङस्भ्यां तउ तुज्झ तुध्र । ८ । ४ । ३७२ ॥ अपभ्रंशे युष्मदो ङसि ङस्भ्यां सह तउ, तुज्झ, तुध्र इत्येते त्रय आदेशा भवन्ति । ङसिना, तउ होन्तउ आगदो, तुज्झान्तउ आगदो । तुध्र होन्तउ आगदो । ङसा—तउ गुण-सम्पइ । तुज्झ मदि तुध्र अणुत्तरखन्ति जइ उप्पत्ति अन्नजण महि मण्डलि सिक्खन्ति । एवं तुध । तव ।

भ्यसाम्भ्यां तुम्हहं । ८ । ४ । ३७३ ॥ अपभ्रंशे युष्मदो भ्यस आम् इत्येताभ्यां सह तुम्हहं इत्यादेशो भवति ॥ तुम्हहं होन्तउ आगदो ॥ तुम्हहं केरउं-धणु ।

तुम्हासु सुपा। ८। ४। ३७४॥ अपभ्रंशे युष्मदः सुपा सह तुम्हासु इत्यादेशो भवति॥ तुम्हासु ठिअं।

सावस्मदो हउं ८। ४। ३७५ अपभ्रंशे अस्मदः सौ परे हउं इत्यादेशो भवति॥ तसुहउं कलि जुगि दुल्लहहो।

जस्—शसो रम्हे अम्हइं॥ ८। ४। ३७६॥ अपभ्रंशे अस्मदो जसि शसि च परे प्रत्येकम् अम्हे-उम्हइं इत्यादेशौ भवतः। जसि, अम्ह, अम्हइं, वयम्। शसि, अम्हे—अम्हइं पेक्खइ। अस्मान्।

टा ड्यमा मइं ८। ४। ३७७॥ अपभ्रंशे अस्मदः टा—ङि—अम् इत्येतैः सह मइ इत्यादेशो भवति।

मइं। मया—मयि, माम्। टा, मइ जाणिउं पिअ विरहि अहं काविधर होइ विआलि। णवरमिअङ्कुवितिहतइ जिहदिणावरु खय गालीअमा—मइ मेल्लन्तहो, तुज्झ।

अम्हेहिं भिसा। ८। ४। ३७८॥ अपभ्रंशे अस्मदो भिसा सह अम्हेहिं इत्यादेशो भवति॥ तुम्हेहिं अम्हेहिं ज किअउं।

महु मज्झु ङसिङस्भ्याम्। ८। ४। ३७९॥ अपभ्रंशे अस्मदो ङसिना ङसा च सह प्रत्येकं महु मज्झु इत्यादेशौ भवतः। महु, मज्झु, मत्—मम। ङसिना महु, होन्त उ, गदो मज्झुहोन्तउ। ङसा—मज्झु पिपण। एवं महु।

अम्महं भ्यसाम् भ्याम्। ८। ४। ३८०॥ अपभ्रंशे अस्मदो भ्यसा आमा च सह अम्हहं इत्यादेशो भवति॥ अम्यहं—अस्मत्, अस्माकम्॥ आमा—अह्ववग्गा अम्हहं तणा।

सुपा अम्हासु। ८। ४। ३८१॥ अपभ्रंशे अस्मदः सुपा सह अम्हसु इत्यादेशो भवति॥ अम्हासु ठिअं॥

स्यादौ दीर्घ ह्रस्वौ। ८। ४। ३३०। अपभ्रंशे नाम्नोऽन्तस्य दीर्घह्रस्वौ स्यादौ प्रायो भवतः।

स्यमोरस्योत्। ८। ४। ३३१॥ अपभ्रंशे अकारस्य स्यमोः परयोरुकारो भवति॥ दहमुहु भुवण—भयङ्करु तोसिअ—सङ्करु णिग्गउ

रहवरि चडिअउ चउमुहु छंमुहु झाइविएक्कहिं लाइविणाटइवें घडिअउ ।

ङसेर्हेहू । ८ । ४ । ३३६ ॥ अकारात्परस्य ङसेर्हे हु इत्यादेशौ भवतः । वच्छहे, हु ॥

भ्यसो हुं, । ४ । ४ । ३३७ ॥ अपभ्रंशेऽकारात्परस्य भ्यसः पञ्चमी-बहुवचनस्य हुं इत्यादेशो भवति ॥ जिह गिरिसिङ्गहुं पडिअ सिलअन्नुविचूरुकरेइ ।

ङसः सु-हो-स्सुवः। ८। ४। ३३८ ॥ अपभ्रंशे अकारात्परस्य ङसः स्थाने सु हो-स्सु इति आदेशा भवन्ति । जो गुणगाइ अप्पणा पयडा करइ परस्स । तसु हउं कालिजुगि दुल्लहहो वलिकिज्जउं सु अण्णस्सु ।

आमो हं । ८ । ४ । ३३९ ॥ अपभ्रंशे अकारात्परस्यामोहमित्यादेशो भवति ॥ तणहं ।

हुंचेदुद्भ्याम् । ४ । ३४० ॥ अपभ्रशे इकारोकाराभ्यां परस्यामो हुं हं चोदशौ भवतः । तरुहुं । सउणिहुं । प्रायोऽधिकारात्क्वचित्सुपोऽपि हुं । दुहुं दिसिहिं ।

ङसि भ्यस्-ङीनां हे-हुं हयः । ८ । ४ । ३४१ ॥ अपभ्रंशे इदुद्भ्यां परेषां ङसि-भ्यस्-ङि इत्येतषां यथासंख्यं हे-हुं हि इत्येते त्रय आदेशा भवन्ति । ङसि, गिरिहे सिलायलु तरुहे फलुघेप्पइनीसावन्नु । भ्यस् , तरुहुं विवक्कलु फलु मुणिविपरिहणु असणु लहन्ति सामिहुं एत्तिउ अग्गलउं आयरु भिच्चु गृहन्ति । ङि-अहविरलपहाउ जि कालिहि धम्मु ।

स्यम्—जस्—शसां लुक् । ८ । ४ । ३४४॥ अपभ्रंशे सि—अम् जस्-शस् इत्येतेषां लोपो भवति । एइति घोडा एह थलि इत्यादि-अत्र स्यम् जसां लोपः । जिवँ जिवँ वकिम लोअणहं णिरु सामलि सिक्खेइ । तिवँ तिवँवम्महु निअय-सरु खर पत्थरि तिक्खेइं । अत्र स्यम् शसां लोपः ।

षष्ठ्याः । ८ । ४ । ३४५ ॥ प्रायो लुग् भवति ॥ सङ्गर-सएहि जु

वण्णिअइ देक्खु अम्हारा कन्तु । अइमत्तहं चत्तङ्कु सहं गय कुम्भइं दारन्तु ॥ पृथग्योगो लक्ष्यानुसारार्थः ।

आमन्त्र्ये जसो होः । ८ । ४ । ४४६ ॥ अपभ्रंशे आमन्त्र्येर्थे वर्तमानान्नाम्नः परस्य जसो हो इत्यादेशो भवति ॥ लोपापवादः ॥ तरुणहो तरुणिहो मुणिउ मइं करहु म अप्पहो घाउ ।

भिस्सुपोर्हिं ॥ ३४७ गुणहिं न सम्पइ कित्ति पर ॥ सुप्-भाईरहि जिवँ भारइ मग्गेहिं तिहिं वि पयट्टइ ॥

स्त्रियां जसशसोरुदोत् ॥ ३४८ ॥ लोपापवादौ जसः, अङ्गुलिउ उज्जरियाओ नहेण । शसः—सुन्दर—सव्वङ्गाउ विलासिणीओ पेच्छन्ताण ।

ट ए ॥ ३४९ ॥ निअ-मुहकरहिं वि मुद्ध कर अन्धारइ पडि पेक्खइ । ससि-मण्डल-चन्दिमए पुणु काइं न दूरे देक्खइ । जहिं मरगय-कन्तिए संवलिअं ॥ ङस् ङस्योर्हे ८ । ४ । ३५० ॥ अपभ्रंशे स्त्रियां वर्तमानान्नाम्नः परयोर्ङस् ङसि इत्येतयोर्हे इत्यादेशो भवति । ङसः–तुच्छ मज्झहे जम्पिरहे । ङसेः–फोडेन्ति जे हि यडउं अप्पणउं ताहं पराइ कवण घण । रक्खेज्जहु लोअहो अप्पणा बालहे जाया विसम थण ।

भ्यसामो हुः । ८ । ४ । ३५१ ॥ अपभ्रंशे स्त्रियां वर्तमानान्नाम्नः परस्य भ्यस-आमश्च हु इत्यादेशो भवति ।भल्ला हुआ जी मारिआ बहिणि महारा कन्तु । लज्जेज्जं तु वयासअहु जइ भग्गा घरु एन्तु । वयस्याभ्यो-वयस्यानां वेत्यर्थः ।

ङेर्हि । ८ । ४ । ३५२॥ अपभ्रंशे स्त्रियां वर्तमानान्नाम्नः परस्य ङेर्हि (हिं) इत्यादेशो भवति । अद्धा वलया महिहि गय अद्धा फुट्ट तडति ।

क्लीबे जस-शसोरिं । ३५३ ॥ कमलइं मेल्लवि अलि-उलइं करि-गण्डाइं महन्ति ॥

कान्तस्यात उं स्यमोः । ८ । ४ । ३५४ ॥ अपभ्रंशे क्लीबे वर्तमानस्य ककारान्तस्य नाम्नो यो कारस्तस्य स्यमोः परयो उं इत्यादेशो भवति ।

तुच्छउं, भग्गउं, पसारिअउं ॥ सर्वादेर्ङसेर्हां । ८ । ४ । ३५५ ॥ अप-भ्रंशे सर्वादेरकारान्तात्परस्य ङसेर्हां इत्यादेशो भवति । जहां–तहां ।

किमो डिहे वा । ८ । ४ । ३५६ ॥ अपभ्रंशे किमोऽकारान्तात्परस्य ङसेर्डिहे इत्यादेशो वा भवति ॥ किहो । ३५६ तं कि हे वङ्कहिं लोअं-णहिं जोइज्ज उं सय-वार ।

यत्तत्किंभ्यो ङसो डासुर्नवा । ८ । ४ । ३५८ । अपभ्रंशे यत्तत्कि-म्भ्योऽकारान्तेभ्यः परस्य ङसो डासु इत्यादेशो वा भवति ।

ङेर्हिं । ३५७ । सर्वादेरकारान्तत्परस्य इत्येव । जहिं कप्पिज्जइ सरिण सरु छिज्जइ खग्गिण खग्गु । तहिं तेहइ भडघड निवहि कन्तु पयासइ मग्गु । एक्कहिं अक्खिहिं सावणु अन्नहिं भद्दवउ । माहउ महिअल—सत्थरि गण्डत्थले सरउ । अङ्गिहिं गिम्हसुहच्छी तिल वणि मग्गसिरु । तहे मुद्धहे मुहपङ्कइ आवासिउ सिसिरु । हिअडा फुट्टि तडत्ति करिकाल क्खेवें काइं ॥ देक्खउं हय विहि काइं ठवइ पइं विणु दुःख सयाइं ।

यत्तत्किंभ्यो ङसो डासुर्न वा । ८ । ४ । ३५८ । इत्येतेभ्यः परस्य ङसो डासु इत्यादेशो भवति । कन्तु महारउ हलि सहिए निच्छइं रूसइ जासु । अत्थिहि सत्थिहिंवि ठाउवि फेडइ तासु । जीविउ कासु न वल्लहउं धणु पुणु कासु न इट्ठु । दोण्णिवि अवसर नि-वाडिआइं तिणसम गणइ विसिट्ठु ।

स्त्रियां डहे । ८ । ४ । ३५९ ॥ अपभ्रंशे स्त्रीलिङ्गे वर्तमानेभ्यो यत्त-त्किंभ्यः परस्य ङसो डहे इत्यादेशो वा भवति । जहे, तहे— कहे-करउ ।

यत्तदः स्यमो ध्रुंत्रं । ८ । ४ । ३६० ॥ अपभ्रंशे यत्तदोः स्थाने स्यमोः परयोर्यथासंख्यं ध्रुं त्रं इत्यादेशौ वा भवतः । प्रङ्गणि चिट्ठदि ना हो-ध्रुत्रं रणि करदि न भ्रन्ति । पक्षे तं बोल्लु अइ जु निव्वहइ ।

इदम इमुः क्लीबे । ८ । ४ ३६१ ॥ स्यमोः परयोरित्येव । इमु कुलु तुह तणउं । इमु कुलु देव ।

एतदः स्त्री पुं-क्लीबे एह-एहो-एहु । ८ । ४ । ३६२ ॥ अपभ्रंशे स्त्रियां पुंसि नपुंसके वर्तमानस्यैतदः स्थाने स्यमोः परयोर्यथासंख्यं एह-एहो-एहु इत्यादेशा भवन्ति ॥

एइ जस् शसोः । ८ । ४ । ३६३ ॥ अपभ्रंशे एतदो जस् शसोः परयोरेइ इत्यादेशो भवति । जसः-ए इति घोडा एइ थलि । शस्-एइ पेच्छ ।

अदस ओइ । ८ । ४ । ३६४ ॥ अपभ्रंशे अदसः स्थाने जस् शसोः परयोरोइ इत्यादेशो भवति ।

इदम आयः । ८ । ४ । ३६५ ॥ अपभ्रंशे इदम शब्दस्य स्यादौ आय इत्यादेशो भवति । आयइं लोअहो लोअणइं जाईं सरइं न भन्ति । अप्पिए दिट्ठइ मउलि अहिं पिए दिट्ठइ विहसन्ति । सोसउ म सोस· उच्चिअ उअही बडवानलस्स किं तेण । जं जलइ जले जलणो आए· णवि किं न पज्जत्तं आयहो दड्ढकलेवरहो जं वाहिउ तं सारु । जइ उट्ठब्भइ तो कुहइ अह अह उज्झइ तो छारु ।

सर्वस्य साहो वा । ८ । ४ । ३६६ ॥ अपभ्रंशे सर्वशब्दस्य साह इत्यादेशो वा भवति ।

किम काइं कवणौ वा । ८ । ४ । ३६७ ॥ अपभ्रंशे किमः स्थाने काइं, कवण इत्यादेशौ वा भवतः ।

त्यादेराद्यत्रयस्य बहुत्वे हिं न वा । ८ । ४ । ३८२ । त्यादीना-माद्यत्रयस्य सम्बन्धिनो बहुष्वर्थेषु वर्तमानस्य वचनस्यापभ्रंशे हिं इत्यादेशो वा भवति । मुहु कवरिबन्ध तहे सोह धरहिं नं मल्ल जुज्झ ससि राहु करहिं ' तहे सहहिं कुरल भमर उल तुलिअ नं तिमिर डिम्भखेल्लन्ति मिलिअ ।

मध्यत्रयस्याद्यस्य हिः । ८ । ४ । ३८३ ॥ त्यादीनां मध्यत्रयस्य यदाद्यं वचनं तस्यापभ्रंशे हि इत्यादेशो वा भवति ।

बहुत्वे हुः । ८ । ४ । ३८४ ॥त्यादीनां मध्यमत्रयस्य सम्बन्धि बहुष्वर्थेषु वर्तमानं यद्वचनं तस्यापभ्रंशे हु इत्यादेशो भवति । बाल

अप्मत्थणि मह्मु महणु लहुइं हुआ सोइ । जइ इच्छहु बड्डुत्तणउं देहु म मग्गहु कोइ । पक्षे इच्छह इत्यादि ।

अन्त्यत्रयस्याद्यस्य उं । ८ । ४ । ३८५ । त्यादीनामन्त्यत्रयस्य यदाद्यं वचनं तस्याऽपभ्रंशे उं इत्यादेशो वा भवति ।

बहुत्वे हुं । ८ । ४ । ३८६ ॥ त्यादीनामन्त्यत्रयस्य सम्बन्धि बहुत्वर्थेषु वर्तमानं यद्वचनं तस्य हुं इत्यादेशो भवति । खग्ग विसाहिउं जहिं लहहुं पिय तहिं देसहिं जाहुं । रणदुब्भिक्खें भग्गाइं विणु जुज्झें न वलाहुं । पक्षे–लहिमु इत्यादि ।

हिस्वयोरिदुदेत् ॥ ८ । ४ । ३८७ ॥ पञ्चम्यां—( लोडादेशस्य संज्ञेयम् ) हिस्वयोरपभ्रंशे इ–उ–ए, इत्येते त्रय आदेशा वा भवन्ति ।

वर्त्स्यति–स्यस्य सः । ८ । ४ । ३८८ ॥ अपभ्रंशे भविष्यदर्थविषयस्य त्यदादेः स्यस्य सो वा भवति । दिअहा जन्ति झडप्पडहिं पडहिं मणोरह पच्छि जं अच्छइ तं माणिअइ होसइ करतु म अच्छि । पक्षे–होहिहि ॥

क्रिये कीसु । ८ । ४ । ३८९ ॥ क्रिये इत्येतस्य क्रिया पदस्यापभ्रंशे कीसु इत्यादेशो वा भवति ॥ सन्ता भोगं जुपरिहरइ तसु कन्तहो वलि कीसु । तसु दइवेणवि मुण्डयउं जसु खल्लिहडउं सीसु । पक्षे–साध्यमानावस्थात् क्रिये इति संस्कृतशब्दादेष: प्रयोगः । वलिकिज्जउं सुअणस्सु ।

भुवः पर्याप्तौ हुच्च ॥ ८ । ४ । ३९० ॥ अपभ्रंशे भुवो धातोः पर्याप्तावर्थे वर्तमानस्य हुच्च इत्यादेशो भवति । अइ तुङ्गत्तणु जं थणहं सा च्छेयउ न हु लाहु । सहि जइ केवइ तुडिवसेण अहरि पहुच्चइ नाहु ।

ब्रूगो ब्रुवो वा । ८ । ४ । ३९१ ॥ अपभ्रंशे-ब्रूगो 'ब्रूञः' धातोर्ब्रुव इत्यादेशो वा भवति ।

व्रजेर्वुञः । ८ । ४ । ३९२ ॥ ब्रुवह सुहासिउ किंपि । पक्षे–इत्तउं ब्रोप्पिणु सउणिहिउ पुणु दूसासणु ब्रोप्पि । अपभ्रंशे व्रजतेर्धातोर्वुञ इत्यादेशो भवति । वुञइ, वुजेप्पि, वुञेप्पिणु ।

दृशेः प्रस्सः । ८ । ४ । ३९३ ॥ अपभ्रंशे दृशेर्धातोः प्रस्स इत्यादेशो भवति । प्रस्सदि ।

ग्रहेर्गृण्हः । ८ । ४ । ३९४ ॥ अपभ्रंशे ग्रहेर्धातोर्गृण्ह इत्यादेशो भवति । पढ गृण्हेप्पिणु व्रतु ।

तक्ष्यादीनां छोल्लादयः । ८ । ४ । ३९५ ॥ अपभ्रंशे तक्षि प्रभृतीनां धातूनां छोल्ल इत्यादय आदेशा भवन्ति । आदिग्रहणाद् देशीषु ये क्रियावचना उपलभ्यन्ते ते उदाहार्याः ॥

अनादौ स्वरादसंयुक्तानां क-ख-त-थ-प-फां,-ग-घ-द-ध-ब-भाः । ८ । ४ । ३९६ ॥ अपभ्रंशेऽपदादौ वर्तमानानां स्वरात्परेषामसंयुक्तानां क-ख-त-थ-प-फां स्थाने ग-घ-द-ध-ब-भाः प्रायो भवन्ति ॥ कस्यगः-जं दिट्ठउ सोम ग्गहणु असइहिंहसिउ निसङ्कु पिअमाणुस विच्छोह गरु गिलिगिलि राहुमयङ्कु । खस्य घः । अम्मीणि सत्थावत्थेहिं सुधिं चिन्तिज्जइ माणु । पिए दिट्ठे हल्लोहलेण का चेअइ अप्पाणु । तथपफानां दधबभाः—

सबधु करेप्पिणु कधिदु मइं तसु पर सभलउ जम्मु । अनादाविति किम् । सबधु करेप्पिणु-अत्र कस्य गत्वं न । स्वरादिति किम् गिलिगिलि । असंयुक्तानां किम् एक्कहिं । प्रायः इति क्वचिन्न अक्रिपा इत्यादि ।

मोऽनुनासिको वो वा । ८ । ४ । ३९७ ॥ तथोक्तस्य मस्य अनुनासिको वकारो वा भवति । कवँलु कमलु । भवँरु ममरु । लाक्षणिकस्यापि । जिवँ, तिवँ जेवँ तेवँ । अनादावित्येव । मयणु । असंयुक्तस्येत्येव । तसु पर सभलउजम्मु ।

अभूतोऽपिक्वचिद् । ८ । ४ । ३९९ ॥ अपभ्रंशे क्वचिदविद्यमानोऽपि रेफो भवति । व्रासु महारिसि एउ भणइ जइ सुइ सत्थु पमाणु । मायहं चलण नवन्ताहं दिवि दिवि गङ्गाण्हाणु । क्वचिदिति किम्, वासेणवि भारह खम्भि बद्ध ।

आपद्विपत्सम्पदां द इः । ८ । ४ । ४०० ॥ अपभ्रंशे आपद् विपद् स·

म्पदां द इकारो भवति आवइ । विवइ सम्पइ । प्रायोधिकारात् गुणहिं न सम्पय कित्तिपर ।

कथं-यथा-तथां थादेरेमेमेहेधाडितः । ८ । ४ । ४०१ ॥ अपभ्रंशे कथं—यथा—तथा इत्येतेषां थादेरवयवस्य प्रत्येकम् एम—इम—इह-इध-इत्येते डितश्चत्वार आदेशा भवन्ति । केम समप्पउ दुट्ठु-दिणु किध रयणी छुडु होइ । नव बहु दंसण लालसउ वहइ मणोरह सोइ । ओगोरीमुहनिज्जिअउ वद्दलिलुक्कु मियङ्कु । अन्नुवि जो परिहविय तणु सो किवँ भवँइ निसङ्कु । बिम्बाहरि तणु रयण वणु किह ठिउ सिरिआणन्द । निरुवम-रसुपिएं पिअवि जणु सेहलो दिण्णी । मुद् एवं तिधजिधा बुराहार्यों ।

याद्दक्ताद्दक्कीद्दशीद्दशांदादेर्डेहः । ८ । ४ । ४०२ ॥ एषां दादेरवयवस्य डित् एह इत्यादेशो भवति । मइं भणिअउ बलिराय तुहं केहउ मग्गण एहु । जेहु तेहु नवि होइ वढ सइं नारायणु एहु ।

अतां डइसः । ८ । ४ । ४०३ ॥ अदन्तानामेषां पूर्वोक्तानां दादेरवयवस्य डइस इत्यादेशः । जइसो-तइसो-अइसो ।

यत्र तत्रयो स्त्रस्य डिदेत्थवत्तु । ८ । ४ । ४०४ ॥ एतयो स्त्रस्य एत्थ अत्तु इत्यतौ डितौ भवतः । जइसो घडदि प्रायवदी केत्थुवि लेप्पिणु सिक्खु । जेत्थुवि तेत्थुवि एत्थु जगिभण तो तहि सारिक्खु । जत्तु-ठिदो तत्तु-ठिदो ।

एत्थुकुत्राऽत्रे । ८ । ४ । ४०५ ॥ कुत्राऽत्रयोस्त्रस्य डित्-एत्थु आदेशः । केत्थुवि, लेप्पिणु । सिक्खु । जेत्थुवि, तेत्थुवि-एत्थु-जगि ।

यावत्तावतोर्वादेर्मउं महिं । ८ । ४ । ४०६ ॥ अपभ्रंशे यावत्तावदित्यव्यययोर्वकारादेरवयवस्य-म-उं-महिं इत्येते त्रय आदेशा भवन्ति । जाम न निवडइ कुम्भ यडि सीह चवेड चडक्क । ताम समत्तहं मय गलहं पइ पइ वज्जेइ ढक्का । तामहिं अच्छउ इयरजणुसु—अणुवि अन्तरुदेइ ।

वायत्तदोतोर्डेवडः । ८ । ४ । ४०७ ॥ अपभ्रंशे यद् तद् इत्ये-

तयोरत्वन्तयोर्यावत्तावतोर्वकारादेरवयवस्य डित् एवड इत्यादेशो वा भवति। जेवडु अन्तरु रावण रामहं तेवडु अन्तरु पट्टण गामहं। पक्षे जेत्तुलो, तेत्तुलो।

वेदं किमोर्यादेः। ८। ४। ४०८॥ इयत्कियतोर्यकारादेरवयवस्य डित् एवड इत्यादेशो वा भवति। एवडु अन्तरु। केवडु अन्तरु। पक्षे एत्तलो केत्तुलो।

परस्परस्यादिरः। ८। ४। ४०९॥ अपभ्रंशे परस्परस्यादिरकारो भवति। अवरोप्परु।

म्हो म्भो वा। ८। ४। ४१२॥ अपभ्रंशे म्ह इत्यस्य स्थाने म्भ इत्यादेशो भवति।

"ह्म इति पक्ष्म श्म ष्म स्म ह्मां म्हः" इति प्राकृत लक्षणविहितोऽत्र गृह्यते संस्कृते तदसम्भवात्। गिम्भो सिम्भो। बम्भते विरला केवि नर जे सवङ्ग छइल्ल। जेवङ्का ते वञ्चयर जे उज्जुअ ते बइल्ल।

प्रायसः प्राउ-प्राइव प्राइम्व पग्गिम्वाः। ८। ४। ४४३।

प्रायस् इत्येतस्य-प्राउ-प्राइव प्राइम्व पग्गिम्व इत्येत आदेशा भवन्ति।

वान्यथोनुः। ८। ४। ४१५॥ अन्यथा शब्दस्य नुर्वा।

कुतसः कउ कहन्तिहु। ८। ४। ४१६॥ स्पष्टम्।

तत-स्तदो स्तोः। ८। ४। ४१७॥ स्पष्टम्।

एवं-परं-समं-धुवं-मा-मनाक, एम्व-पर-समाणु-ध्रुवु-मं-मणाउं। ८। ४। ४१८॥ एवमादीनाम्। यथाक्रमम् एम्वादय आदेशा भवन्ति।

किला-ऽथवा-दिवा-सह-नहेः, किरा-हवइ-दिवं-सहुं-नाहि। ८। ४। ४१९॥ यथाक्रममादेशा ज्ञेयाः।

विषण्णोक्त-वर्त्मनो वुल-वुत्त विच्चं। ८। ४। ४२१। विषण्णादीनां यथाक्रमं वुन्नादय आदेशा भवन्ति।

शीघ्रादीनां वहिल्लादयः। ८। ४। ४२२॥ शीघ्रस्य वहिल्लः। झकटस्य घङ्घलः। अस्पृश्यसंसर्गस्य—विहालः। भयस्य-द्रवक्कः।

आत्मीयस्य अप्पणः । असाधारणस्य सड्ढलः । कौतुकस्य कोड्डुः । क्रीडायाः खेड्डुः । रम्यस्य रवण्णः । अद्‌भुतस्य ढक्करि । हे सखी-त्यस्य हेल्लिः । पृथक् पृथगित्यस्य जुअं जुअः । मूढस्य नालिअव-ढौ । नवस्य नवखः । अवस्कन्दस्य दडवडः । सम्बन्धिनः केरतणौ । मा भैषीरित्यस्य—मब्भीसेति । स्त्रीलिङ्गम् । यद्यद्दृष्टतत्तदित्यस्य—जाइट्टिआ ।

हुहुरु-घुग्घादयः शब्द-चेष्टाऽनुकरणयोः । ८ । ४ । ४२३ ॥ अप-भ्रंशे हुहुर्वादय शब्दानुकरण घुग्घादये श्चेष्टानुकरणे यथा स-ङ्ख्यं प्रयोक्तव्याः ।

घइमादयोऽनर्थकाः । ८ । ४ । ४२४ ॥ आदि पदाद्-खाइं इत्यादयः ।

तादर्थ्ये केहिं-तेहिं-रेसि-रेसिं-तणेणाः । ८ । ४ । ४२५ ॥ एतेपञ्च निपातास्तादर्थ्ये प्रयोक्तव्याः ।

युष्मदादेरीयस्य डारः । ८ । ४ । ४३४ ॥ अपभ्रंशे युष्मदादिभ्यः परस्य ईय प्रत्ययस्य डार इत्यादेशो भवति । तुहार । त्वदीय ।

त्रस्य डेत्तहे । ८ । ४ । ४३६ ॥ अपभ्रंशे सर्वादेः सप्तम्यन्तात्परस्य त्र प्रत्ययस्य डेत्तहे इत्यादेशो भवति ।

तव्यस्य इएव्वउं एव्वउं एवा । ८ । ४ । ४३८ ॥ अपभ्रंशे तव्यप्रत्य-यस्य इएव्वउं एव्वउं एवा इत्येत आदेशा भवन्ति ।

क्त इ-इउ-इवि-अवयः । ८ । ४ । ४३९ ॥ क्त्वाप्रत्ययस्य एते चत्वार आदेशा भवन्ति ।

तुम एव मणाऽणहमणहिं च । ८ । ४ । ४० ॥ अपभ्रंशे तुमः प्रत्य-यस्य एवम् अण-अणहम्-अणहिं इत्येते चत्वार आदेशा भवन्ति ।

तृनोऽणअ । ८ । ४ । ४४३ ॥ अपभ्रंशे तृन् प्रत्ययस्य अणअ इत्या-देशो भवति ।

इवार्थे नं-नउ-नाइ-नावइ-जणि-जणवः । ८ । ४ । ४४४ ॥ अप-भ्रंशे इवार्थे एते षट् आदेशा भवन्ति ।

लिङ्गमतन्त्रम् । ८ । ४ । ४४५ ॥ अपभ्रंशे लिङ्गमतन्त्रं व्यभि-चारि प्रायो भवति ।

शौरसेनीवत् । ८ । ४ । ४४६ ॥ अपभ्रंशे प्रायः शौरसेनीवत् कार्यं भवति ।

व्यत्ययश्च । ८ । ४ । ४४७ ॥ प्राकृतादि भाषालक्षणानां व्यत्ययश्च भवति । यथा मागध्यां तिष्ठश्चिष्ठः इत्युक्तं तथा प्राकृतपैशाची शौरसेनीष्वपि भवति । चिष्ठदि । अपभ्रंशे रेफस्याधोवा लुगुक्तो मागध्यामपि भवति । शद-माणुश-मंश-भालके । कुम्भशहश्च वशाहे शश्चिदे इत्याद्यन्यदपि द्रष्टव्यम् । न केवलं भाषालक्षणानां त्याद्यादेशानामपि व्यत्ययो भवति । ये वर्तमानकाले प्रसिद्धास्ते भूतेऽपि भवन्ति । अह पेच्छइ रहुतणओ । अथ प्रेक्षाञ्चक्रे इत्यर्थः । आभासइ रयणीअरे । आबभासे रजनीचरानित्यर्थः । भूते प्रसिद्धा वर्तमानेऽपि । सोहीअ एस वण्ठो । शृणोत्येष वण्ठ इत्यर्थः ।

शेषं संस्कृतवत्सिद्धम् । ८ । ४ । ४४८ । शेषं यदत्र प्राकृतभाषासु अष्टमेनोक्तं तत्सप्ताध्यायीनिबद्धं संस्कृतवदेव सिद्धम् ।

हेट्ठ-ट्ठिअ-सूर-निवारणाय छत्तं अहो इव वहन्ती । जयइ ससेसावराहसास दूरुक्खुया पुहवी । अत्र तुर्थ्या आदेशो नोक्तः स च संस्कृतवदेव सिद्धः । उक्तमपि क्वचित् संस्कृतवदेव भवति । यथा प्राकृते उरस शब्दस्य सप्तम्येकवचनान्तस्य उरे उरम्मि इति प्रयोगौ भवतस्तथा क्वचिदुरसीत्यपि भवति । एवं सिरे सिरम्मि । शिरसि । सरे । सरम्मि । सरसि ।

अत्र लाटीचूलिकादीनां विशेषभेदाऽभावान्न ग्रन्थविस्तरो वितन्यते मागध्याद्याः सविशेषं पूर्वमेवोक्ताः ॥

इति हेमानुशासनेऽपभ्रंशविचारः समाप्तः ॥



# अथ शब्दरूपदिग्दर्शनम् ।

अकारान्तः पुल्लिङ्गो (वच्छ=वत्स, वृक्ष शब्दः )

प्र० वच्छो=वत्सः । वृक्षो वा एव सर्वत्र प० वच्छा, । वच्छे=वत्साः । व०(१) ।

द्वि० वच्छं=वत्सम् । प०वच्छा, वच्छे=वत्सान् । व०

तृ० वच्छेण(२)=वत्सेन । प० वच्छेहिं, वच्छेहिहिं, वच्छेहि=वत्सैः । व०

पं० वच्छादु, वच्छाहि वच्छाओ=वत्सात् । प० वच्छत्तो, वच्छाउ वच्छाहित्तो—इत्यादि क्वचित् वच्छाहिन्तो=वच्छासुन्तो, वच्छेहिन्तो, सुन्तो, वत्सेभ्यः । व०

ष० वच्छस्स=वत्सस्य । प० वच्छाण, वच्छाणं=वत्सानाम् । व०

स० वच्छे, वच्छम्मि=वत्से । प० वच्छेहिं, हुं(१)वत्सेषु सं-वच्छ, वच्छो=हे वत्स । शेषं प्रथमावत् गोशब्दः पुंसि गावो, गावे-इत्याद्यदन्तवत् वच्छा । एव मेकारौकारान्तादयः एवं देव-कसण इत्यादयः अकारान्ताः शब्दाः बोध्याः ।

---

(१) प्राकृतभाषासु द्विवचनं चतुर्थी विभक्तिश्च भवति । "सर्वत्र षष्ठीव चतुर्थ्याः" इति क्रमदीश्वरः । यथा विप्पस्स देहि ।

(२) कल्पलतिकाकारमते वच्छेणं, वच्छाणं टामोरूपम् ।

(१) अपभ्रंशे सप्तम्या बहुवचने सुपिहुं हुस्वा क्वचिद्भवति ।

---

इकारान्तः पुल्लिङ्गः (अग्गि=अग्नि) शब्दः ।

प्र० अग्गी=अग्निः । प०(२) अग्गीओ=अग्नयः । व० अग्गिणो(३)

द्वि० अग्गिं=अग्निम् । प०

(२) अग्निशब्दस्य प्राकृते अग्गी, अग्गिणी इति द्वे रूपे भवत इति केचिद् ।

(३) क्रमदीश्वरः "जस ओरो रिणश्चात्" इति सूत्रेण अग्गओ, अग्गरो, साहओ, साहरो इत्येतानि साधितवान् ।

अग्गी(१) अग्गिणो = अग्नीन्। व० तृ० अग्गिणा = अग्निना। ए० अग्गीहि, अग्गीहिं = अग्निभिः। व० पं० अग्गीदु, हि अग्गीदो = अग्नेः। ए० अग्गीसुंतो, अग्गीहिंतो = अग्निभ्यः। व० ष० अग्गिस्स, अग्गिणो = अग्नेः। ए० अग्गिण, (अग्गीणं) क्वचित् अग्गिणं = अग्नीनाम्। व० स० अग्गिम्मि = अग्नौ। ए० अग्गीसु, सुं = अग्निषु। व० सं० अग्गि = हे अग्ने!। ए० एवं गिरि-अह्यादयः

## उकारान्तः पुंलिङ्गो (वाउ = वायु) शब्दः।

प्र० वाऊ = वायुः। ए० वाउणो, वाउओ, वाउओ = वायवः। व० द्वि० वाउं = वायुम्। ए० वाउणो = वायून्। व० वाउहु, हुं (अपभ्रंश) तृ० वाउणा = वायुना। ए० वाऊहि, वाऊहिं = वायुभिः। व० पं० वाउदो, दु, हि = वायोः। ए० वाउहिन्तो, सुन्तो = वायुभ्यः। व० ष० वाउस्स, वाउणो = वायोः। ए० वाउणं, ण = वायूनाम्। व० स० वाउम्मि = वायौ। ए० वाऊसु, सुं = वायुषु। व० सं० वाउ = हे वायो। ए० वाउओ-हे वायवः। व एवं-कारुगुरुप्रभृतयः हेमचन्द्रमतानुसारेण सर्वे ईकारान्ता ऊकारान्ताश्च प्राकृते ह्रस्वाः प्रयुज्यन्ते अतः अग्निवायुवत्तेषां रूपाणि भवन्ति।

## ऋकारान्तः पुंल्लिङ्गः (पिअर = पितृ) शब्दः।

प्र० पिआ, = (पिदा-शौर-)पिअरो पिता। ए० पिअरो, पिअरा पितरः। व० द्वि० पिअरं = (पिदरं = शौर-) पितरम्। ए० पिदुणो, पिअरे = पितॄन्। व० तृ० पिदुणा, पिअरेण = पित्रा। ए० पिअरेहिं, हि = पितृभिः। व० पं० पियरादो, दु, हि (पिदुणो शौर०) = पितुः। ए० पिअराहितो, सुतो पिदुहिंतो, सुन्तो, = पितृभ्यः। व० ष० पिअरस्स = (पिदुणो शौर०। पितुः ए० पिअराणं, ण पिदुणं = पितॄणाम्। व०

---

(१) अग्गिओ, अग्गि, गुरुओ, गुरु, इति केषाञ्चिन्मते शालि रूपं स्यात्।

स० पिअरे = पिअरम्मि, पिदुम्मि शौर० पिअरेसु सु = पितृषु० (पिदुसु, सु शौर-) पितरि । ए०
सं० हे पिअ, पिअर = हे पितः हे पिअरा = हे पितरः एवं जामातृ-भ्रातृप्रभृतयः ।

## ऋकारान्तः पुंल्लिङ्गो (भत्तार= भर्तृ) शब्दः ।

प्र० भत्तारो = भर्ता । ए० भत्तारा, भत्तुणो = भर्तारः । ब०
द्वि भत्तारं = भर्तारम् । ए० भत्तारे, भत्तुणो = भर्तॄन् । ब०
तृ० भत्तारेण, भत्तुणा = भर्त्रा । ए० भत्तारेहिं भत्तुहिं = भर्तृभिः । ब०
पं० भत्ताराद्, हि भत्तुणो भत्ताराहो = भर्तुः । ए० भत्तारहिन्तो, सुन्तो भत्तुहिन्तो, सुन्तो = भर्तृभ्यः । ब०
ष० भत्तारस्स, भत्तुणो = भर्तुः । ए० भत्ताराणं, भत्तुणं = भर्तृणाम् । ब०
स० भत्तारम्मि, भत्तुम्मि, भत्तारे = भर्त्तरि । ए० । भत्तारेसु, सुं भत्तुसु, सु = भर्तृषु । ब०
सं० हे भत्तार = हे भर्तः । ए० हे भत्तारा: = हे भर्तारः । ब० एवं कर्तृ होतृ प्रभृतयः ।

## आवन्तः स्त्रीलिङ्गो (माला) शब्दः ।

प्र० माला-माला । ए० माला मालाउ, ओ, = माला । ब०
द्वि० मालं = मालाम् । ए० मालाउ, ओ, माला = मालाः । ब०
तृ० मालाइ, अ, आ मालाए = मालया । ए० मालाहि, मालाहिं = मालाभिः । ब०
पं० मालाए, मालादु, हि. मालादो = मालायाः । ए० मालाहिंतो सुंतो = मालाभ्यः । ब०
ष० मालाइ, मालाए = मालायाः । ए० मालाणं, ण = मालानाम । ब०
स० मालाइ. मालाए = मालायाम् । ए० मालासु, सुं = मालासु । ब०
सं० हे माले = हे माले । ए० हे मालाओ = हे मालाः । ब०
एवं बाला, लता, छाहा, हलद्दा प्रभृतयः । स्वसृ ननान्दृ दुहितृ इत्येतेषां क्रमात् ससा, णणंदा दुहिआ (१) इत्यादेशा भवन्ति । एतेषां मालावद्रूपाणि ज्ञेयानि ।

(१) दुहितृ भगिन्योर्धूआ बहिण्यौ । ८ । २ । १२६ ॥
अनयोरेतावादेशौ वा भवतः । धूआ । दुहिआ = दुहिता । बहि·

इकारान्तः स्त्रीलिङ्गो ( मति ) शब्दः ।

प्र० मती=मतिः । मतिओ, उ, मती=मतयः । व०

द्वि० मतिं=मतिम । ए० मतिओ, उ, मती=मतीः । व०

तृ० मतीए, इ, आ, अ=मत्या ए० मतीहिं, हि=मतिभिः । व०

पं० मतीअ, आ, । मतीए, इ= मत्याः ए० मतीहिंतो, सुंतो= मतिभ्यः । व०

ष० मतीए, इ, आ=मत्याः।ए० मतीणं, ण=मतीनाम् । व०

स० मतीए, इ, अ आ=मत्यां ए० मतीसु, सुं=मतिषु । सं हे मती=हेमति । ए० हे मती, आ=हेमतयः । व० एवं रुचि बुद्धि प्रभृतयः ।

---

णी, भइणी=भगिनी ।

स्वस्रादेर्डा । ८ । ३ । ३५ ॥ स्वस्रादेः स्त्रियां वर्तमानात् डाप्रत्ययो भवति ॥ मातृ-पितुः स्वसुः सिआ—छौ ८ । ३ । ३६ । मातृपितृभ्यां परस्य स्वसृ शब्दस्य सिआ छा इत्यादेशौ भवतः । माउ-सिआ माउ-छा पिउ-सिआ पिउ-छा । हे० ।

ईकारान्तः स्त्रीलिङ्गो (णाई= नदी ) शब्दः ।

प्र० णाई, आ नई, आ=नदी । ए० णाईओ, आ नईओ, ओ= नद्यः । व०

द्वि० णाइं नइं=नदीम् । ए० णाई, आ, आ नई, आ, आ= नदीः । व०

तृ० णाईए, इ, अ, आ नईए, इ, अ, आ=नद्या । ए० णाईहि-हि नईहि, हिं=नदीभिः । व०

पं० णाईए, अ, ई, आ नईए, अ, इ, आ=नद्याः । ए० णाई, णाई हिंतो, सुन्तो नई, नईहिंतो, सुंतो=नदीभ्यः । व०

ष० णाईए, ई, अ, आ. नईए, ई, अ, आ=नद्याः । ए० णाईण, ण नईण, ण=नदीनाम् । व०

सं० णईए, इ, अ, आ नईए, इ, अ, आ=नद्याम् । ए० स णई सु, सुं=नदीषु । व०

सं० हे णाइ-शेषं, प्रथमावत् एवं गौरी छाही हलद्दी प्रभृतयः ।

---

उकारान्तः स्त्रीलिङ्गो ( धेनु ) शब्दः ।

प्र० धेणू=धेनुः । ए० धेणू धेणूओ, धेणूउ=धेनवः । व०

द्वि० धेणुं=धेनुम् । ए० धेणू धेणुओ, उ,=धेनूः । ब० ।

तृ० धेणूए, इ, अ, आ=धेन्वा । ए० धेणूहि, हिं=धेनुभिः । ब०

पं० धेणूदो,इ,ए,अ,आ=धेन्वाः। ए० धेणूहिंतो,सुंतो=धेनुभ्यः।ब०

स० धेणूए,इ, आ=धेन्वाः।ए० धेणूणं, ण=धेनूनाम् । ब०

स० धेणूए, इ, अ, आ=धेन्वाम् ए० धेनूसु, सुं=धेनुषु

सं० हेधेणु, णू हे धेनु-शे० प्रथमावत् एवं तनु रज्जु प्रियङ्गु प्रभृतयः ।

---

ऊकारान्तः स्त्रीलिङ्गो

( वहू-वधू ) शब्दः ।

ड० वहू=वधूः । ए० वहू , वहूओ, उ=वध्वः । ब०

द्वि० वहूं=वधूम् । ए० वहू , वहूओ, उ=वधूः । ब०

तृ० वहूए, इ, अ, आ=वध्वा वहूहि, हिं=वधूभिः । ब०

पं० वहूदो, वहूए, अ, आइ=वध्वाः ए० वहूहिन्तो, सुन्तो=वधूभ्यः । ब०

ष० वहूए, इ, अ, आ=वध्वाः। ए० वहूण, णं०=वधूनाम् । ब०

स० वहूए, इ, अ, आ=वध्वाम् । वहूसु, सु=वधूषु

सं हे वहू-हेवधु शे० प्रथमावत् एवं वामोरुप्रभृतयः ।

---

ऋकारान्तः स्त्रीलिङ्गो

( माअ=मातृ ) शब्दः ।

प्र० माआ=माता । ए० माआः=मातरः । ब०

द्वि० माअं (मादरं शौर०)= मातरम् । ए० माए=मातॄः । ब०

तृ० माआइ, अ, आ, ए=मात्रा ए० माएहिं, हि=मातृभिः । ब०

पं० मा आदो, ए, अ, आ= मातुः । ए० मा आहिंतो,सुंतो= मातृभ्यः । ब०

ष० माआइ, ए,अ, आ=मातुः। ए० माआणं, ण=मातॄणाम्

स० माआइ,ए, अ, आ=मातरि । ए० मा असु, सुं,=मातृषु

सं० हेमाअ=हे मातः । हेमच- मातृशब्दस्य मा अरा, माई इति रूपद्वयमाबन्तमीबन्तञ्च पपाठ । ओकारान्त स्त्रीलिङ्गगोशब्दस्य गावी, गाई गोणी इति रूपाणि भवन्ति अतः ईकारान्त णईवत् रूपाणि भवन्ति । गोपोतलिका रूपन्त्वाबन्त शब्दवज्ज्ञेयम् ।

---

## अकारान्त नपुंसकलिङ्गो (वण=वन) शब्दः ।

प्र० वणं=वनम् प० वणाणि वणाइं, वणाइँ=वनानि । व० एवं द्वितीया । सं० हे वणं=हे वन शेषं पुंल्लिङ्गाकारान्तशब्दवत् । एवं धण कुल प्रभृतयः ।

---

## इकारान्त नपुंसकलिङ्गो (दहि=दधि) शब्दः ।

प्र० दहिं,दहि,=दधि । प० दहीणि, इं, इँ=दधीनि व० । द्वि० एवं द्वितीया सं० हे दहि=हे दधि । शे० प्रथमावत् शे० पुंल्लिङ्गेकारान्त शब्दवत् ।

---

## उकारान्त नपुंसकलिङ्गो (महु=मधु) शब्दः ।

प्र० महु=मधु । प० महूणि, महूइं, इँ=मधूनि । न० एवं द्वितीया सं० महु=हे मधु, धो शेषमुकारान्त पुंल्लिङ्गवज्ज्ञेयम ।

---

## नकारान्तः पुंल्लिङ्ग आत्मन् शब्दः

प्र० अत्ताणो,अप्पा, णो, अत्ता= आत्मा अपाणा, णो, आप्पा= आत्मानः अप्पा, अप्पाणो । अप्पाण । द्वि० अप्पाणं अप्पं, अप्पअं=आत्मानं

अप्पाणु. अप्पु । अप्पणो अप्पाणो } आत्मनः

तृ० अप्पणइआ=अप्पणा, अप्पणिआ, अप्पोणण अप्पहो आत्मना अप्पाणोहि अप्पेहि } आत्मभिः

पं० अप्पाणाओ अप्पणो, अप्पाओ अप्पादो, दु, हि=आत्मनः । अप्पाणाहिंतो, सुंतो, अप्पाहिंतो, सुन्तो=आत्मभ्यः ।

ष० अप्पाणस्स अप्पाणो= आत्मनः । अप्पाणाणं, अप्पाणे= आत्मनाम् ।

स० अप्पाणम्मि,अप्पे=आत्मनि अप्पाणेसु, सुं अप्पसु=आत्मसु । सं० हे अप्पं । इत्यादि(१) ।

## (राजन्=राअ-)

प्र० राय=राआ(२)=राजा

---

(१) भगवत् भवच्छब्दयोः सम्बोधने क्रमदीश्वरो भगवं, भवं इति ।

(२) हेमचन्द्रेण विकल्पेन नान्तस्य पुंसि "आणो" आदेशो विहितः । यथा राआणो, राआ । क्रमदीश्वरेण–राइणा । राइणणा, रण्णा, इति साधितम् ।

रायाा, राआ, रायाणो, राआणो, राइणो = राजानः

द्वि० रायं राअं = राजनम् । राया, रायाणो, राए = राज्ञः । राआणो ।

तृ० राइणा, राएण, रण्णा, राचिना, रञ्ञा = राज्ञा । राईहिं, राएहिं, रायाणेहिं = राजभिः ।

पं० रण्णो, रायाउ, राआदो, दु, हि = राज्ञः । राईहिन्तो, सुन्तो, राआहिंतो = राजभ्यः ।

ष० राइणो, रण्णो, राअस्स रायस्स = राज्ञः । राआणं राईणं, राआणण = राज्ञाम् ।

स० राइम्मि, राअम्मि, राए राज्ञि = राज्ञि राइसु, राएसु, सु = राजसु, राआ, राअं रायं = हे राजन् । लाचा = राजन् (१)

एवं ब्रह्मन्, युवन्, अध्वन्, एवमादयो यथा लक्ष्यमवगन्तव्याः ।

---

अथ सर्वनामानि ।

( सर्व )

सव्वो = सर्वः । सव्वे = सर्वे । १ । व्वं = सर्वम् । सव्वे = सर्वान् । २ ।

---

(१) इदं पैशाच्या बोध्यम्, अन्यत् समानम् ।

स. स व्वेण = सर्वेण । सव्वेहिं = सर्वैः । ३ । सव्वदोव, त्तो दुः = हि सर्वस्मात् । सव्वेहिंतो. सुंतो = सर्वेभ्यः । ५ । सव्वस्स = सर्वस्य । सवेसिं सव्वाणं = सर्वेषाम् । ६ । सव्वस्सिं, म्मि, त्थ, हिं = सर्वस्मिन् । सव्वेसु सुं सर्वेसु । ७ । स्त्रीलिङ्गे नपुंसकेचादन्तवत् ।

( तत् = त )

प्र० स, सो, सु = सः ति, ते = ते सा = सा ता ताओ, ताउ, तीओ = ताः अं, तं = तत् द्वि० तं = तम् तं = ताम् । ते तान् तृ० णेण = तिणा तेण, तेणं, नेन = तेन णेहिं, तेहि, तेहिं = तैः णाए, तिअ, नाइ = तया ताहि = ताभिः

पं० तम्हा तत्तो, ३-१० तहा, तदो ६-१०ता, ताओ = तस्मात् तत्तो ६-१० तो ४-१० तेभ्यः

ष० तस्स, तसु, तासु = तस्य ताण, ताणं, तास, तेसिं = तेषाम् तहे, तास, ताए, तिस्सा, तीइ, तीए, तीसे = तस्याः तसिं = तासाम्

तम्मि, तस्सि, तहिं (= तस्मिन् तइआ = तदा ६-८ तस्मिन्काले

